*[न चालम्बनंव्यतिरिक्तं रूपमस्याह अर्थान्तरानुसन्धान इषितं तु न चार्थान्तरमर्थान्तरानुसन्धानतयालम्बनमित्यतोऽर्थान्तरानुसन्धानात् स्वलक्षणालम्बनमपि कल्पनेत्युच्यते तस्मात् स्वसंवेद्यज्ञानपक्ष एवैतदेकालम्बनत्वेऽपि ज्ञानान्यत्वसंवेदनमुपपद्यते अन्यथा ह्यालम्बनमात्रात्ववगतिरेव स्यात् न स्वलक्षणसामान्यावगतिः स्वलक्षणव्यतिरिक्तं च न सामान्यमस्तीति प्रदर्शितम् रूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात् इति अर्थान्तरस्यानुसन्धानात् अनुसन्धानं च ज्ञानभेद उपपद्यत इति उपपन्नः सामान्यविशेषव्यवहारो लौकिकः एवं चानित्ये नित्यबुद्धिः असुखे सुखबुद्धिः अनात्मन्यबुद्धिः उपपन्नाः संसारहेतवो विपरीतग्रहाः तदिदमुक्तम् प्राक् बाधकज्ञानोत्पत्तेः कथमिदमवगम्यत इति एकालम्बनाभिप्रायेण सामान्यविशेषज्ञानादयो न ह्यन्यसंप्रयुक्ते चक्षुषि अन्यालम्बनस्य ज्ञानस्योत्पत्तिः संभवति अन्धस्यानुत्पादात् इत्युक्तम् अत एवेदमुच्यते नान्याकारमालम्बनं अन्याकारस्य ज्ञानस्योत्पत्तिहेतुरिति । कथं तर्हि विपरीतग्रहाः अनात्मन्यात्मादय उच्यते । विषयान्तरसदृशमवलम्ब्यागृहीतविवेकं यत् ज्ञानमुत्पन्नं तत् सदृशाविषयान्यरे स्मृतिज्ञानहेतुतां प्रतिपद्यते स्म एवमिति ज्ञानशून्यस्य उपपन्नानि तावत् शुक्तिकादिषु रजतादिज्ञानादि अनात्मादिषु स्वप्नादिषु च कथं स्वप्नादिषु च तावत् पूर्वोक्तेभ्यो विशेषमभिधाय निरालम्बनवादेषु पुनरविशेषं वक्ष्यति आत्मवा.. चानात्मादिषु तस्मान्नार्थान्तरानुसन्धानाध्यासः ननिमित्तं शुक्त्यादिज्ञानम् यत्तु भारूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात् इत्युक्तम् तदसिद्धम् अर्थान्तरानुसन्धानज्ञानस्य हि स्वलक्षणज्ञानान्यत्वमिष्टम् तच्चाप्रत्यक्षज्ञानाभावादिनोऽर्थ एव प्राप्नोति तस्मादासिद्धमिदम् रूपान्तराग्रहणात् तदग्रहे तद्बुध्यभावात् इति तस्मात् सूक्तं अन्यसंप्रयुक्ते संप्रयुक्तविषये चक्षुष्यन्यविषयं ज्ञानप्रत्यक्षमिति कथं र्हि विपर्ययः अग्रहणादेवेति वदामः अग्रहणनिमित्तता च दर्शिता भाष्यकारेण यदि चक्षुरादिभिरुपहतं मनः इति कथमनेनाग्रहणनिमित्तता दर्शिता भवति यदन्यविषयं विज्ञानमित्यस्याः प्रतिज्ञाहेतुत्वेनोपन्यासात् युक्तं च दृष्टतायाः कार्याक्षमत्वम् न पुनः कार्ये सामर्थ्यम् तस्मादग्रहणनिबन्धना एव विपर्यया इत्यतः सिद्धम् यस्य च दुष्टं करणम् यस्य च मिथ्येति प्रत्ययः स एवासमीचीनप्रत्ययो नान्य इति । ]

---

*[ ] एतदङ्कितं ( ) एतदङ्कितात्परमस्ति मातृकायाम् ।

(ननु सर्व निरालम्बनः स्वप्नवत् प्रत्ययः कुतस्तत्संप्रयुक्तत्वमतत्संप्रयुक्तत्वं वा येन विशेषेण प्रत्यक्षाप्रत्यक्षयोर्विशेष उपलभ्यते कथं पुनः सर्व एव निरालम्बनः प्रत्ययः प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षित स्वप्ने

ननु च शुक्तिकायां रजतज्ञानं स्मरामीति प्रमोषात् स्मृतिज्ञानमुक्तम् युक्तं रजतादिषु तत्र हि शुक्तिकायां यद्भास्वररूपं चक्षुषा परिच्छिन्नं तद्रजत-स्मृतेरुद्बोधकमित्युपपद्येतापि स्वप्नादिषु पुनः कस्यचिदग्रहणादर्थान्तरे स्मृत्युद्बोध-कपरिहारः शक्य इव प्रतिभाति तस्माद्वासनानिबन्धनमेवेदं ज्ञानजालमिति प्रतिपद्यामहे ईदृशादर्शनात् सदृशोर्थान्तरे स्मृतेरुद्बोधः स्वप्ने पुनः कस्यचि-दग्रहणादित्युक्तम् तस्माद्वासनैव निमित्तमिति लघ्वी कल्पना नार्थान्तराश्रयणम् अव्याप्तेः अतः कुड्यादिष्वपि ज्ञानं वासनानिमित्तमेव न कुड्याद्यर्थनिमित्तमिति स्थितिः । उच्यते । कार्यसिध्यर्थं हि कारणं कल्प्यते न पुनः कार्यविनाशाय स्वप्नादिषु च बहिरवभासा संवित् सा च बाह्यमर्थमन्तरेण न संभवति येन च विना यन्न संभवति तत्तस्य कारणम् तस्मादर्थ एव कारणमिति युक्तं कल्पयितुम् निरालम्बनता नैव संवेद्यते प्रत्यक्षावबोधेन तस्मादक्षजं ज्ञानम् न वासनानिमित्तमित्युक्तम्

ननु स्वप्नोपलब्धं मिथ्येति प्रतिबुद्धस्य ज्ञानमुत्पद्यते न च मिथ्याभावस्य कारणकल्पना युक्ता

ननु चाकारणस्य मिथ्याप्रत्ययस्याप्युत्पादो न घटते सत्यम् न घटते न त्ववगत्यनुगुणं तत् तदानुगुण्ये हि मिथ्याज्ञानतैव न स्यात् तस्माद्व्यामो-हहेतवो मिथ्याप्रत्ययाः व्यामोहनिबन्धनाश्च सांसारिक्यो वासनाः अतो वासना-निबन्धनमेवेदं ज्ञानजालमुदितं तत्त्वविद्भिः तत्तु परिहृतमेतत् स्मरामीति ज्ञानशून्यानि स्मृतिज्ञानान्येतानि ।

ननु स्मृतेरुद्बोधकारणसंभवान्नैतत् संभवतीत्युक्तं तदसिद्धम् स्वप्नादावपि हि चिन्तादृष्टादिसंभवात् स्वप्ने हि सुखदुःखमनुभूयते सुखदुःखहेतुश्चादृष्ट मतोऽदृष्टहेतुकमेव स्वप्नादिज्ञानं किञ्चिच्चिन्तादिहेतुकमित्युपपन्नम् शुक्तिकादि-ज्ञानतुल्यत्वं स्वप्नादिज्ञानस्य तदिदमुक्तम् संभूतिर्जाग्रतो बुद्धिः सुपरिनिश्चिता

कथं विपर्यसिष्यति । कथमनेनेदमुक्तम् निश्चितमविच्छिन्नमित्यर्थः कथमव-च्छिन्नार्थोऽनवच्छिन्नो भवति कथं तर्हि प्रतिबुद्धो मिथ्येति जानाति उक्तं स्मरामीति स्मृतिप्रमोषात् प्रत्यक्षसंमितं तत् प्रतिबुद्धस्य चापैति प्रत्यक्षा-भिमानः अमुमेवार्थं स्पष्टीकरोति अथ प्रतीतिस्तथाभावस्य हेतुः न शक्यते प्रत्ययादपसव्य इति वदितुम् यदि प्रत्ययत्वात् इति नावगतिं मिथ्येति मन्यते अन्यतो हि स्वप्नज्ञानस्य मिथ्याभाव इति प्रमोषनिमित्ततां दर्शयति कुतः इन्द्रियदौर्बल्येपन्यासात् निद्राक्रान्तं मे मन इत्यादिना दौर्बल्यं च कार्याक्षमत्वम् न कार्यान्तरोत्पत्तिसमर्थत्वमियुक्तम् ।

ननु शून्यस्तु इति सैव निरालम्बनतोपन्यस्ता प्रत्ययस्यार्थशून्यतां वदता निरस्ता च सा शुक्तिकारजतज्ञानतुल्यताभिधानेन स एवायं निरासः पुनराक्षिप्यते कया युक्त्या संवेद्य) विषयत्वात् संविदः सा चात्मनो बुद्धेः ज्ञान एव वा स एवास्य विषयो युक्तः यस्मात् सा संवित् एवं च स एव संवेद्य इति प्राप्नोति तस्मात् न विषयान्तरं संवेदयितुं क्षमः शब्दस्पर्श-रूपरसगन्धात्मकता विज्ञानस्यात्मनो बुद्धेर्वा प्रतिपत्तव्या किमर्थज्ञानयोराकारभेदं नोपलभामह इति ज्ञानशब्दः प्रदर्शनार्थं एवाभिप्रेतः न संविदाधारे हि संवेद्ये ज्ञानमेवावशिष्यते बध्यात्मनोः शब्दादितुल्यत्वात् ज्ञानादिनाभूता च संवित् सुषुप्त्यवस्थायां सह्यात्मानि बुद्धौ चादर्शनात् ज्ञानोपसंहृतिः स्वापः इदमालोच्यो-क्तम् अर्थज्ञानयोराकारभेदं नोपलभामह इति क पुनरिदं दृष्टम् विषय एव संविदा संवेद्यते इति संवेद्यतयैव हि संवेद्यतामवगच्छामो न विषयतया केन वोक्तम् न संवेद्यतया संवेद्यतावगम्यत इति किन्तु संविदः प्रत्यक्षत्वात् तस्याश्च ज्ञानात्मकत्वात् शब्दादिरूपणा तस्यैवेति मन्यामहे को हि नाम द्वयोः प्रत्यक्षतां कल्पयति संविदः शब्दादेश्च तस्मात् संविद्रूपमेवेदं शब्दादिजातमिति स्थितिः न बाह्यं किञ्चनास्तीति ।

ननु चायथार्था संवित् प्राप्नोति शब्दाद्याकारत्वे हि संविदो ग्राह्यग्रा-हकसंवेदनं नोपपद्यते तस्मात् कल्पना सेत कल्पनीयम् न च सर्वलो-कावगम्योऽर्थः कल्पनेति युक्तम् न चार्थान्तरसन्धा नाननुविद्धं क्वचित् कल्पना-शब्दाभिलपनीयं लोके दृष्टम् तस्माद्वरमुभयोः प्रत्यक्षता न पुनरवगतेरपलापः संविदेव हि तदा हीयेत कस्येयं शब्दादिरूपता युक्तं ग्राह्यग्राहकवेदनमा-

कारान्तरेण स्यात् न चाकारान्तरमुपलभामहे नीलाद्यकारमेव ह्युभयं प्रतिभाति एकाकारं चोभयप्रतिभानं किमन्यदतः प्रतिभानात् तदिदमुक्तम् अर्थज्ञानयोराकारभेदं नोपलभामह इति प्रत्यक्षा च नो बुद्धिरित्येतदुक्तं भवति प्रत्यक्षा च नः संविदिति प्रत्यक्षश्चायं नीलाद्याकारः अतस्तदाकारेयं संवित् उभयता प्रतिभाति तस्मादर्थशून्येयं संविदिति सिद्धम् अतस्तत्संप्रयोगात् तत्संप्रत्यय इति प्रलापोऽयं किंनिमित्तं पुनरुभयाप्रतिभानम् अकारभेदं नोपलभामह इति प्रत्युक्तम् प्रतिभानकारणं तु प्रतिभानदर्शनगदवास्तीत्यवगन्तव्यम् सा चेयं वासनानादिकालीनेत्युक्तं शून्यवादिभिः ।

उच्यते उभयप्रतिभानं नीलपीतादावसिद्धम् ग्राह्यतस्यैव तत् प्रतिभाति न ग्राहकतया ग्राहकम् ग्राहकमित्येव मनुते न नीलं पीतमिति वा तदित्युक्तम् स हि बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यत इति अर्थविषया हि प्रत्यक्षा बुद्धिः न बुद्धिविषयेति ग्राह्यतयैव रूपप्रतिभानं दर्शयति ग्राहकप्रतिभानं तु न रूपविषयम् किं तर्हि ज्ञानविषयम्

ननु च रूपान्तरेणैवं नोपपद्यत इत्युक्तम् कथमत्र विषयान्तरोपन्यासः न हि प्रत्यक्षवादिनो ह्ययं दोषः आनुमानिकज्ञानवादिनस्तु नायं पर्यनुयोगः नाप्यनुमानाद्रूपग्रहणं सन्मात्रानुग्राह्यनुमानं भवति ।

ननु च संवित् प्रत्यक्षे त्युक्तम् अन्या च संवित्, अन्यत् संवेद्यम् द्वयोरपि प्रत्यक्षत्वे रूपद्वयोपलब्ध्या भवितव्यम् न चासावस्ति तस्मात् स एव संविद्विषयापलापो न्याय्यतां प्रतिपद्यते अविवेकोऽयमायुष्मतः न हि फले रूपन्तरतेष्यते रूपान्तरसंवित्तौ हि फलद्वयापत्तिः एकसंवेद्यविषयैव ह्येका संवित् न सा वेद्यद्वयविषया किमसंवेद्यैव संवित् न ब्रूमः न संवेद्या संवित् संवित्तयैव हि संवित् संवेद्या, न संवेद्यतया केयं वाचोयुक्तिः संवेद्या न संवेद्या इति इयमियं वाचोयुक्तिः नास्याः कर्मभावो विद्यते इति कर्म च संवेद्याभिधेयम्, न संवित् तस्मान्न पृथक् संवेद्यतया ग्रहीतुं शक्यते न चासंवेद्यैव संवित्, तन्मूलत्मात् सर्वभावानां संवेद्यभावस्य किं तर्ह्यत्रानुमानिकम् फलमेव हि प्रमाणमिति प्रमाणविदो मन्यन्ते किमिति मन्यन्ते न पुनः फलमेव इति स्थितोऽभिप्रायः एवं हि लौकिको व्यवहारः किमिदम् लौकिको व्यवहारः इति आकारद्वयं लौकिकाः प्रतिपद्यन्त इत्यर्थः

सिद्धं तर्ह्यर्थद्वयम्, विज्ञानस्यासंवेद्यत्वात् अर्थस्य च संवेद्यत्वात् किमसंवेद्यमेव विज्ञानम् बाढमसंवेद्यम्, न त्वप्रमेयम् कः पुनः प्रमेयसंवेद्ययोर्विशेषः यत्र हि विषयस्य स्वरूपं परिच्छिद्यते, तत् संवेद्यमित्युच्यते अतः संवेदनं प्रत्यक्षमिति प्रमाणविदः असंवेदना च प्रमितिज्ञाने आकारान्तराग्रहणात् तस्मात् ज्ञानं प्रत्यक्षमित्ययुक्तम् क्षणिकत्वाच्चास्य प्रत्यक्षता न संभवति, प्रमाणफलयोरसाम्प्रतत्वात् तदिदमाह

क्षणिका हि सा न बुध्यन्तरकालमवस्थास्यते इति अथायमभिप्रायः स्वयं प्रमाणरूपत्वान्न प्रमाणान्तरमपेक्षते ज्ञानम् इति तदुक्तम् उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं प्रदीपवदिति यद्युच्येत इति सत्यं प्रमाणं प्रमाणान्तरं नापेक्षते प्रमितौ न च वयं प्रमाणतयैव विजानीमः तद्धेतुत्वाद्विज्ञानस्य न च तदवस्थं ज्ञानं ज्ञेयतया ज्ञानान्तरस्यापि वदामः किन्तु तदवस्था तावदस्तीत्यनुमानस्य विषयः न ह्यसत्यामवस्थायामवस्थावतोऽस्तित्वं शक्यते ज्ञातुम् तदिदमुक्तम् न ह्यज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते ज्ञाते त्वनुमानादवगच्छति तत्र यौगपद्यमनुपपन्नम् इति ।

ननु च ज्ञानमिति प्रमेयमनुस्मरन्ति प्रमाणविदः सत्यं ज्ञातं स्मरन्ति न तु ज्ञातमिति तदुक्तं सत्यं पूर्वं बुद्धिरुत्पद्यते न तु पूर्वं ज्ञायते इति ।

ननु चेदं लोकविरुद्धं ज्ञातो ह्यर्थ इति स्मरणात् व्यपदिशन्तीति न घटमिति सत्यं विरुद्धं यदि सर्वदैव व्यपदेशः स्यात् भवति हि कदाचिदेतत् यज्ज्ञतोऽर्थः सन् ज्ञाता इत्युच्यते यत्र हि ज्ञात इति स्मृतिः सा प्रमाणद्वयव्यापारजा तस्मात् विवेकशून्यमिदं वचः स्मृतेरुत्तरकालं चेति ।

किञ्च उभयोः प्रत्यक्षत्वेऽर्थेन ज्ञानस्य व्यपदेशो नोपपद्यते रूपस्पर्शयोरिव । न चार्थव्यपदेशमन्तरेण बुद्धरूपोपलम्भनम् । तस्मान्न बुद्धिविषयं प्रत्यक्षं अर्थविषयं हि तत् । अतः सिद्धमानुमानिकत्वं बुद्धेः फलतः । यश्चासावविवेकः फलप्रमेययोः प्रमाणान्तराभावात् स तद्विषयो युक्तः । यतः प्रमाणापल एव न्याय्यो न प्रमेयापलापः ।

अतः काममेकरूपत्वे बुद्धेरेवाभा वो न त्वर्थस्य प्रत्यक्षस्य न चैकरूप्यम् निराकारामेव बहि बुद्धिमनुमिमीमहे साकारं चार्थप्रत्यक्षमवगच्छामः तस्मादर्था-

लम्बनः प्रत्ययः किं पुनः कारणं तुल्ये फलापलापे प्रमाणस्यैवापलापो न त्वर्थस्य प्रमेयस्य उभयोः फलायत्तत्वात् मैवम् उत्पत्तौ ह्युभयोः फलात्तता न पुनः प्रमितौ । कस्योत्पत्तौ ज्ञापके हि फले प्रमेयमेव हि ज्ञेयं नोत्पाद्यं प्रमाणायत्ता च प्रमितिरिति उत्पत्तावित्यसम्बद्धम् । प्रमितौ क्रिया-कारकत्वमङ्गीकृत्योत्पत्तिरुक्ता न चावगम्यमानताम् ज्ञाने त्ववगम्यमानतापि फलायत्तैवेति युक्तम् किञ्च ज्ञानमात्रवादे हि ज्ञानवासनयोरेव जन्यजनकभावो न ज्ञानस्य ज्ञानान्तरेण अतस्तन्तुज्ञानोपादानेऽपि पटज्ञानोत्पादो नोपपद्यते । दृष्टं च नियतनिमित्ततन्तुष्वेवोपादीयमानेषु पटप्रत्ययः इतरथा हि तन्तूपादा-नेऽहि कदाचित्तदा पटबुद्धिरविकलेन्द्रियस्य स्यात् । तस्मान्नावसानानिबन्धनमेवेदं ज्ञानजालं किं तर्ह्यर्थनिबन्धनमिति स्थितम् । अत उपपन्नं प्रमाणलक्षणाभिधानम् ।

अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकशान्तरेसन्निकृष्टेऽर्थे बुद्धिरिति । ज्ञातसम्बन्धस्येत्युच्यते कस्य ज्ञातसम्बन्धस्य नन्वेकदेशस्य । नैतदुपपद्यते दर्शनोपसर्जनत्वादेकदेशस्य न ह्युपसर्जनं पदं पदान्तरेण सम्बद्ध्यते राज-पुरुषवत् नहि पुरुषसमुदाययोरुपादानादेवासम्बन्धः तस्मान्न विद्मः कस्य ज्ञात-सम्बन्धस्येति । उच्यते । सम्बन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौ सम्बन्धः । अयमसौ सम्बन्धः । अनुमानमेकदेशदर्शनादेकदेशान्तरेसन्निकृष्टेऽर्थे बुद्धिः कस्यैकदेशस्य दर्शनात् ज्ञातसम्बन्धस्य ।

नन्वस्मिन्नपि सम्बन्ध एकदेशस्योपसर्जनता तदवस्थैवोपसर्जनमिति नायं सम्बन्धहेतुः आकाङ्क्षितं पूरणसमर्थं च सम्बन्धितामापद्यते । अत्र चै कदेशदर्शनात् इत्युक्ते कस्यैकदेशस्येत्याकाङ्क्षा दर्शनस्य दृश्यप्रधानतज्जत्वात् न्यत्वाच्चार्थान्तरबुद्धेरत एव चात्रोत्तरपदप्रधानता । अत्र पूर्वपदप्रधानतेति क्वचित् क्वचित् स्थापितम् । तस्मात् प्रयोगसिध्यर्थैवेयमुपसर्शनसंज्ञा अत्र सम्बन्धे हि यस्मादर्थाकाङ्क्षैव हेतुः नोपसर्जनता अनुपसर्जनता वा कस्य गुरुकुलमित्येवमादिषु दर्शनात् ।

उच्यते (ज्ञा) व्याप्यं हि दृष्टं (ज्ञा) व्यापकं गमयति ज्ञातसम्बन्धस्येति न च व्याप्य एषा षष्ठी सम्बन्धिमात्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । उच्यते सत्यं सम्बन्धिनी षष्ठी । व्याप्य एव तु सम्बन्धि भवति अव्याप्येऽपि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी तथा (अथ) तत्र तत्र षष्ठ्यर्थं व्याख्यास्यामः । तथा च लौकिकाः ममायमयं पुनरन्यस्यापीति व्यपदिशन्ति ।

तत्तु द्विविधमिति किमिदं द्वैविध्यम् लक्षणद्वैविध्यं तावन्नास्ति एकदेश-दर्शनादित्येकत्वाल्लक्षणस्य । अथ प्रमेयद्वैविध्यमङ्गीकृत्यैतदुच्यते । एकत्र विशेषा-द्विशेषोऽवगम्यते अन्यत्र सामान्यात्सामान्यावगतिरिति एवं च हेतुमद्भेदाद्धे-तोरपि भेद उक्तो भवति किं पुनरनयोर्भेदकथनप्रयोजनम् लक्षणाभिधानेन चाव्यभिचारितोक्ता भवति तदर्थश्चायं प्रयासः । हेतुहेतुमतोर्द्वैविध्यं भवतु वा मा वा ।

अत्र केचिन्नीतिज्ञंमन्याः अनवधत्तं च स्वलक्षणमेव क्वचिदनुमानेन सामान्यतो न गृह्यत इति मन्यन्ते तद्भ्रमापनोदनायैतदुक्तम् ..तु द्विविधमिति अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु कथं पुनरदृष्टस्वलक्षणे सम्बन्धि-दर्शनं उत्पत्तिमतः फलस्य दर्शनादित्युक्तमुपपादितमधस्तादस्माभिः शून्यवादे । अतः सामान्यमात्रपर्यवसाय्यनुमानमस्ति । दर्शितं च देवदत्तस्या....गति-पूर्विकामिति । कः पुनरनुमाने व्यभिचारः यथा प्रत्यक्षे शुक्तिकादिषु नन्वि-दानीमेव द्विविधशब्देन प्रदर्शितम् । नन्वानुमानिकेत्यानुमानिकं निरसनीयम् । न पुनरनुमानस्योद्धारो वक्तव्यः । कश्चात्र विशेषः । येऽपि ह्यानुमानिकम-नानुमानिकमिच्छन्ति तेऽप्यनुमानं व्यभिचारयन्त्येव । तस्मादत्रापि व्यभिचार-निवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम् ।

किञ्च प्रमेयेऽपि सङ्करः न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचिद्विशेषा एवावगम्यन्ते इत्यपरे । स्मृतिमात्रमेवेत्यन्ये । तस्मात् ज्ञासम्बन्धस्यैकदेशदर्शनाद्यदेकदेशान्तरे ज्ञानमसन्निकृष्ट इति विशि-नष्टि । किमनेन निराकृतं स्मरणं तावन्निरस्तं सन्निकृष्ट इति वचनात् । अप्रतिपत्तिरपि निरस्तैव बुद्ध्यत्पादवचनात् सम्बन्धावगमादिति विशेषावगति-रपि निरस्तैव ।

ननु च बुद्ध्युत्पादमात्राद्प्रमाणता शक्यते वक्तुम् । शुक्तिकादिषु व्यभिचारात् । असम्बन्धस्य त्र दर्शनं सम्बन्धाभिधानादेव प्रत्युक्तम् । सम्बन्धा-वगमे च पूर्वानुभवेषु दुर्निवारः । अहो नयाविवेकिनो महान् प्रमादः । किं पूर्वदृष्टस्यानुभवो न संभवति अनुभूतिश्च न प्रमाणं । अन्यता च स्मृतिरन्योऽ नुभवः । सत्यम् । सम्बन्धस्य दर्शनादिस्मृतिं सम्बन्ध्यन्तरे त्वनुभव एव ।

ततश्चासंशयं पुनः पुनर्दृश्यमानं दृश्यत एवेति तार्किकाः व्यपदिशन्ति न स्मर्यत इति । सिद्धं चानुमानादिषु प्रमाणत्वमनुभूतेः किं तर्हि असन्निकृष्ट इति स्मरणाभिमानशून्य इत्यर्थः । सन्निकृष्टावमर्शे हि स्मरणमेव मन्यन्ते ।

ननु स्मृतिप्रमोषतुल्यतैव प्राप्नोति न । कारणान्तरस्य विद्यमानत्वाल्लिङ्गादेः न ह्यत्र पूर्वानुभूतिरेव कारणम् । तत्र हि प्रमोषः स्मृतिविपर्यये हेतुः । इह तु लिङ्गादि प्रत्युत्पन्नं कारणमस्तीति सिद्धं प्रमाण्यम् । तस्मादत्रापि यत्प्रमाणं तद्व्ययभिचरतीति वक्तव्यमुक्तं च । इदमुपमानादिष्वपि योज्यम् ॥

शास्त्रं दृष्टविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम् । किमिदं शब्दविज्ञानमिति किं शब्दाद्विज्ञानं शब्दविज्ञानं शब्दविज्ञानं यदि तावच्छब्दे विज्ञानं शब्दालम्बनमित्यर्थः तदयुक्तम् न तस्माच्छासनमवगम्यते शासनाद्धि शास्त्रम् । अथ शब्दाद्यदर्थविज्ञानमुत्पद्यते तच्छब्दविज्ञानम् तत्र विशेषावगतौ कारणं वक्तव्यम् । तदुक्तं च शास्त्रं हि शासनात् तच्चार्थविषय एव विज्ञान मुपपद्यते न शब्दविषये । द्वितीयेऽपि पक्षे तन्निमित्ततयोपपत्तेः सिद्धं शास्त्रं प्रहणात् । ननु च शब्दाभासमपि दृष्टम् एष वन्ध्यासुतो यातीत्येवमादि तदपि शब्दादेवावगम्यते न हि बाष्पादितुल्यं किञ्चित्कारणान्तरमत्रोपलभामहे । परिहृतं तच्चेत् प्रत्ययितादिति लक्षणाभिधानेन चायमेव व्यभिचारो निरस्तः ॥

उपमानमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयति सादृश्यमिति किं सादृश्यम् । ननु च ज्ञातसम्बन्धिता तुल्या सा चात्र लक्षणं तत्र वान्यत्र वेति दमुपयुज्यते बाढमुपयुज्यते एकदेशदर्शनादिति हि तत्र लक्षणम् । ज्ञातसम्बन्धस्येति विशेषणम् । अतो न गवयस्थं सादृश्यं सदृशावगतेरेकदेशः ।

किञ्च असकृद्दृष्टसम्बन्धोऽप्यनुमानस्य हेतुः असजातीयव्यावृत्तिसव्यपेक्षं च द्वयमत्र नास्तीति प्रमाणान्तरम् । किं पुनरत्र व्यभिचारदर्शनं यन्निवृत्त्यर्थमिदं लक्षणं किमन्यदतः सदृशाभासात् । अत्र सामान्यमेव कैश्चित् सादृश्यमुक्तम् । न तत्सादृश्यम् । किं तर्हि तदेव तत् गोत्वादेरेकत्वात् । ननु चात्र प्रमेयमेव नास्तीति केचिन्मन्यन्ते तदयुक्तम् अनुभूतमपि कारणान्तरावगम्यं प्रमेयमेवत्युक्तम् ॥

अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना यथा जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना । केयमन्यथानुपपत्तिर्नाम यदि तावदस्यानेन विना सद्भावो नोपपद्यते तदेवं कार्यतः कारणानुमानमुपन्यस्तं न प्रमाणान्तरम् ।

अथेदमुच्यते ज्ञातसम्बन्धस्येत्यनुमानलक्षणं अज्ञातश्चात्र सम्बन्धस्तस्मात् प्रमाणान्तरमिति तदयुक्तम् । कथमज्ञातः सम्बन्धः शक्यतेऽवगन्तुं अयमनेन विना नोपपद्यते इति न ह्यन्यथानुपपत्तिः प्रत्यक्षसमधिगम्या । कार्याव्यभिचारसमधिगम्या हि सा अव्यभिचारश्चा कृद्दर्शनपूर्वकः तस्मात् दृष्टमदृष्टं वा ज्ञातसम्बन्धमेवावगम्यते अन्यथानुपपत्त्या । अतः प्रमाणान्तरं मृगतृष्णिकैवेति । सत्यम् । यदि यद्येन विना नोपपद्यते तदेवावगमकं स्यात् । इह तु यन्नोपपद्यते तदेवावगम्यते ।

किं चात्र नोपपद्यते जीवतो गृहाभावदर्शनात् अन्यत्राभावो नोपपद्यते ततः किम् नात्राभावस्य गम्यता कस्य तर्हि भावस्य । न चासौ गृहाभावदर्शने नोपपद्यते । बाढं नोपपद्यते न हि गृहाभावदर्शनेन विना बहिर्भाव उपपद्यते ।

ननु दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इति गमकस्यान्यथानुपपद्यमानतां दर्शयति । अग्रन्थज्ञो देवानां प्रियः दृष्टः श्रुतो वार्थोऽर्थकल्पना किमिदमर्थकल्पनेति दृष्टः श्रुतो वार्थोऽर्थान्तरस्य प्रमाणमित्यर्थः । अन्यथा नोपपद्यते इति केन सम्बध्यते प्रमित्येति वदामः अन्यथानुपपद्यमानतामापादयन् अर्थान्तरं गमयति । किमत्र ज्ञातसम्बन्धिता नैवापेक्ष्यते अपेक्ष्यते हि सम्बन्धज्ञानमात्रम् न तु सम्बन्धिता अनुमाने तु ज्ञातसम्बन्धस्येति षष्ठ्या सम्बन्धितैवाकगमिकेत्युक्तम् । न संबन्धमात्रज्ञानम् ।

दृष्टः श्रुतो वेति दर्शनश्रवणोपन्यासः किं कारणान्तरव्युदासाय नेति वदामः उपलब्धोऽर्थ इत्यर्थः । श्रुतग्रहणमिदानीं किमर्थं दृष्टमित्येव वक्तव्यम् । उच्यते अभिधानान्तरमेवेदं दृष्टः श्रुतो वेत्युपलब्धेर्वाचकम् ॥

अभावोऽपि प्रमाणान्तराभावो नास्तीत्यस्यार्थस्यासन्निकृष्टस्य । अभावोऽपि प्रमाणाभाव इति किं प्रमाणलक्षणमिदं ओमित्युच्यते । किमनेन प्रमीयते उक्तं

नास्तीत्ययमर्थः । प्रमीयमाणस्य प्रमेयता अत्र च त्प्रमाणतेत्यलोकमिव प्रतिभाति । लक्षणमपि प्रमाणाभाव इति प्रमाणाभाव इत्येव लक्षयति । प्रसिद्धिर्मीमांसकानां षष्ठं किलेदं प्रमाणमिति । न चास्य ग्रन्थतो लोकतश्च प्रमाणतावसीयते । अतो न विद्म प्रसिद्धेः किं बीजमिति । किमत्र न ज्ञायते ग्रन्थनस्तावत् प्रमाणाभाव एवावसीयते । नास्तीत्युक्ते प्रमेयस्यैवाभावं लौकिकाः प्रतिपद्यन्ते । किं तर्ह्यनेन लक्षितेन प्रमाणावगत्यर्थोऽयमारम्भः तदनुसारी ह्यर्थनिश्चयः कथं स्यादिति । अत एवेदमुच्यते यस्मात् प्रमाणावगत्यर्थोऽयमारम्भः । किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयते यत्पूर्वोक्तैरेव स्वलक्षणैर्नावसीयते । सर्वलक्षाणभिधानवाक्यशेषोऽयं ग्रन्थः न ह्युत्पादमात्राज्ज्ञानस्यार्थे तस्मिन् प्रमाणस्य प्रमाणतावसीयते । अतः स्वलक्षणमात्राभिधानात् निश्चयः स्वरूपेण प्रमाणस्य समधिगम्यमानत्वात् सर्वप्रमाणानां तस्मात् कार्यप्रत्यस्तमयात् नास्तीत्यनेन पूर्वोक्तस्यैव लक्षणस्य साधुनोच्यते । कथं तर्हि प्रसिद्धिः प्रसिद्धिर्वटयक्षप्रसिद्धिवत् । यदि पुनर्व्यवहारान्यत्वात् (प्रमेया) कारणान्यत्वं मन्यन्ते किं कुर्मः न हि व्यवहारान्यत्वात् प्र(मेया)माणान्यत्वसिद्धिः । अतः । (स्व)तल्लक्षणमेवेदं इदमेवे च तल्लक्षण तस्मात् प्रसिद्धत्वादपरीक्ष्यं निमित्तम् ॥

प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि शब्दस्तु न प्रमाणम् । कुतः अनिमित्तं विमानोपलम्भनत्वात् । अनिमित्तमप्रमाणं शब्दः यो ह्युपलम्भनविषयो नोपलभ्यते स नास्ति यथा शशस्य विषाणम् । उपलम्भनानि चेन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्ट्यनन्तरं पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला । प्रत्यक्षादीन्यति भवन्तु प्रमाणानि शब्दस्तु न प्रमाणमिति कोऽभिप्रायः अयमभिप्रायः यदुक्तमनपेक्षत्वादिति प्रमाणान्तरान्नावगम्यमर्थमवयतीत्येतावन्मृषा । कुतः भविष्यंश्चैषोऽर्थ इति भाव्यतया प्रामाण्यमुक्तं तदत्र न संभवति । कथं पुनरसम्भवः किमनियोगकं वाक्यमस्तीति किमत्र नियोगः करिष्यति प्रमाणान्तरावगम्ये हि तस्य दर्शनात् स्मृत्यादौ । अतस्तस्माद्विनिश्चयः नावगम्य एव अर्थमालोच्य विषयो वक्तव्यः । स चायं विनिश्चयोऽसौ विद्यमानोपलम्भनविषय एवोपलभ्यते चित्रया यजेत पशुकाम इत्यादौ । कात्र विद्यमानोपलम्भनता क्रियानन्तरफलभाविता दृष्टार्थत्वाच्च न दृष्टयादेः अनन्तरफलभावितया प्रमाणान्तरावगम्यतैव वस्तुतो वक्तुं शक्यते संभवति च प्रमाणान्तरविषत्वे को हि नाम दृष्टं लोके स्वातन्त्र्यं शब्दस्य कल्पयितुं क्षमः तस्मान्नियोग

प्रैषाद्यर्थ एव इति प्रतिवक्तव्यः तदिदं कुत इत्येतस्य प्रश्नस्य विद्यमानो-पलम्भनत्वादित्युत्तरम् ।

नन्वेवं ग्रन्थे व्याख्यायमाने पशवो नोपलभ्यन्त इत्यादिरनर्थको ग्रन्थः उपलभ्यन्तां मा वा पशवः । सर्वथा प्रमाणान्तरसापेक्षं शाब्दमित्येतावदत्र साध्यं सत्यमेतावत् साध्यं केन चोक्तमन्यत् साद्व्यमिति अनुपलब्ध्युपन्यासो न घटत इत्युक्तम् । न घटते न घटत एव प्रमाणान्तरप्रतीक्षया प्रामाण्यं वक्तव्यं न स्वत इत्येवंपरो ग्रन्थः । तच्चात्र प्रमाणान्तरं दृष्टं कथं पुनरत्र दृष्टा-वगतिः क्रियानन्तरभावित्वात्फलस्य कथं तर्हि बाष्पादिकी कृष्यादेर्नानन्तरं फलमवगम्य उत प्रयोजनफलं यागनादितात क्रियाफलमवगम्यते व्रीह्युत्पत्तिस्तु प्रयोजनफलं न च प्रयोजनावगमात् दृष्टतोच्यते । अत्र च प्रयोजनं फल च पशाव एवावगम्यन्ते फलान्तरानवगमात् । तच्च किञ्चिद्धर्मिविकारोऽवगम्यते तत्पाटनादिबुद्धीद्युत्पत्तेः पशोः कारणतया शक्यते वक्तुं अदर्शनात् । तस्मात् प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या न पुनरध्ययनाद्धर्मावगतिः । कथं पुनः स्वर्गकामादिषु विद्यमानोपलम्भनता नियोगस्य तावन्नियोगत्वं पश्चा-दावपहृतम् एकश्चायं नियोगोऽनुबन्धभेदाद्भिद्यत इति तस्मात् सर्वत्र सापेक्षं भवति । अतो [म] यत्र प्रमाणान्तरमस्ति भवतु तत्र तथात्वम् यत्र नास्ति तत्र मा भूत् तस्मात् सुष्ठूक्तं शब्दस्तु न प्रमाणमिति । दृष्टविरुद्धं च किञ्चिद्वैदिकं वचनं पात्रचयनं विधाय आह स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं यातीति प्रत्यक्षं शरीरं व्यपदिशति । न च तत् स्वर्गं लोकं याति प्रत्यक्षं हि तद्दृष्टान्ते न चैष यातीति विधिशब्दः । एवंजातीयकं च प्रमाणविद्ध मप्रमाणम् कथं पुनरिदं प्रमाणविरुद्धमर्थवादेषु च सर्वे प्रमाण-विरोधा गुणवादेन व्याख्याताः ।

अथायमभिप्रायः नाद्याप्यर्थवादा व्याख्यायन्त इति बालिशभाषितमे तत् । न ह्युक्तरयोच्यमानस्य वा (व्या) स्थितस्याक्षेपो युक्तः । अन्यत्र विशेषा-भिधानात् । उक्तोच्यमानताविशेषेऽपि वक्ष्यमाणे सर्वम(न)वस्थितं स्यात् । तस्मात् स्थितत्वास्थितत्वमेव वक्तव्यावक्तव्ययोः कारणम् । किं (न) चात्रो-पन्यस्तस्य परिहृतस्य तत्र पुनरुपन्यासो घटते प्रत्यक्षविरोधादिति । उच्यते स्थित एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते अत्र हि तदुक्तो

गुणवादो हि प्रमाणान्तरप्रतिपत्तिबलेनोपजायते अत्र च प्रमाणान्तरप्रतिपत्तिः शरीर एव न शरीरव्यतिरिक्तं किञ्चिदुपलभामहे । तच्चैष इति व्यपदिष्टं यातीत्यनेन विरुद्धम् (दृश्य) दह्यमानत्वाच्च शरीरस्य । तस्माद्धि विधितोऽर्थवादः आयथार्थतावसायते । किञ्च विधौ हि सति नियोगतोऽपि तावत् स्वातन्त्र्यशङ्का जायते अर्थवादे सापि नास्तीति प्रकटयति न चैष यातीति विधिशब्द इत्युच्यते न प्रमाणान्तरापेक्षं शब्दस्यार्थेन सम्बन्धः कस्तर्ह्यौत्पत्तिकः ।

ननु च लोके प्रमा(णान्तरापेक्षि)तैव सर्वस्य वचसो दृष्टा सत्यम् व्यवहारे (न)त्वभिधाने यथा लोकेऽप्यौत्पत्तिकमेवाभिधानं तथा सम्बन्(पे)परिहारे वक्ष्यामः ननु सर्व एवायं सूत्रार्थो विज्ञातः पुनरनूदितः सत्यं विशेषाभिधानाय कः पुनरत्र विशेषोऽभिधीयते ननु च सम्बन्ध एव नास्तीति पूर्वोक्तमाक्षिप्य पुनः समाधिः ।

ननु वाक्यार्थोऽयमाक्षिप्तो विद्यमानोपलम्भनत्वादिति पदविषयन्त्वौत्पत्तिकत्वं मन्यन्ते मीमांसकाः । किमनयोपासितगुरुकथया विकल्पितया यस्माद्धि यः प्रतीयते स तस्यार्थः न च केवलात्पदात् वृद्धव्यवहारे कस्यचिदर्थस्यावगतिर्दृष्टानवगम्यमानस्य चार्थस्य केनचित्सम्बन्ध इति दुर्वचनं वचः । कथं तर्हि प्रसिद्धिरियम् अनुपासितगुरुत्वादित्युक्तम् तस्मादौत्पत्तिको वाक्यार्थयोः सम्बन्धः ॥

स्यादेतदेतत् नैव शब्दस्यार्थेनास्ति सम्बन्धः । कुतोऽस्य पौरुषेयतापौरुषेयतावेति कथम् । स्याच्चेदर्थेन सम्बन्धः क्षुरमोदकशब्दोच्चारणा( त् ) मुखस्य पाटनपूरणे स्याताम् । संश्लेषसम्बन्धमभिप्रेत्योच्यते भवता कार्यकारणनिमित्तनैमित्तकाश्रयाश्रयियैानादयः सम्बन्धाः शब्दस्यार्थेनानुपपन्ना एवेति । स्यादेतदिति यदि नित्यः सम्बन्धः स्यादित्यर्थ. इदं किमिति न स्यात् । स्याच्चोदनालक्षणाऽर्थो धर्म इति स्याच्चेदर्थेन सम्बन्ध इति । अस्याभावे हेतुं क्षुर मोदकशब्दोच्चारणग्रन्थेन ब्रुवन् सम्बन्धस्याभ्युपगमं दर्शयति संश्लेषसम्बन्धमभिप्रेत्येति । केनायमभ्युपगतः सम्बन्धः येन निराकरनणीयतया उपन्यस्यते ।

ननु च शब्दस्वातन्त्र्यवादिभिः शब्दादर्थोऽवगम्यते इत्ययमेवाभ्युपगतः सम्बन्धः अनभ्युपगतस्य निराकरणमन्धपदमिदमेवात्र निराक्रियते यदुत शब्दादर्थोऽवगम्यत इति । कथं पुनः संश्लेषसम्बन्धनिराकरणेनैतन्निराकरणेनैतन्निराकृतं भवति भवति शब्दादर्थज्ञानं हि कार्ये केनचित्कारणेन शब्दादर्थ-

ज्ञानं च न च शब्दादेवेति शक्यते वक्तुं चक्षुरादीनामिव प्रथमश्रवणाद-प्रतीतेः । एवं तर्हि धूमादीनामग्न्याद्यर्थावगताविव न स्वरूपमेव कारणम् । किं तर्हि सहावस्थानादिलक्षणः सम्बन्धः । स चायं शब्दे न कश्चिदुपल-भ्यते प्रागर्थावगमात् । तस्मात् सम्बन्धान्तरनिराकरणेन वाच्यवाचकता निरा-कृता भवति ।

यद्येवं सर्व एव निराकरणीयाः किमिदमुच्यते यौनादयो न संभवन्तीति संश्लेषस्यैव सहेतुकं निराकरणम् अथायमभिप्रायः यौनादयो नोपलभ्यन्त इति संश्लेषो वा किमुपलभ्यते तथा च क्षुरमोदकशब्दोच्चारण इत्यनुपलब्धि-रेवोपन्यस्ता । तस्मान्न विद्मः केन विशेषेणेदं निराकरणीयोपन्यस्तमिति ।

अथायमभिप्रायः । संश्लिष्टस्यैवार्थस्य गम्यते गमकत्वाच्चेति तदयुक्तम् कार्यकारणयोरसंश्लिष्टयोरपि गम्यमानत्वदर्शनात् । कार्यकारणमपि तन्त्वादि संश्लिष्टमिति चेत् नैमित्तिके संभवति तदपि हि कारणमेव गम्यं च तस्मादि-दमन्धपदमिति प्रतिभाति । उच्यते अत्र ह्यौत्पत्तिकवादिनः केचित् स्वमेव रूपमध्यस्य शब्दोऽर्थं प्रत्याययतीति प्रतिपन्नाः युक्तिश्चोक्ता स्वयमेव रूपं शब्दस्य येयमर्थपरिणतिरिति । अत स्तन्निराकरणम् तस्मिन् पक्षे संश्लेषभावः शब्दार्थयोः सम्बन्धः । सोऽयं कार्यानुपलब्ध्या न घटते इति क्षुरमोदक-शब्दोच्चारणे मुखस्य पाटन पूरणे स्यातामित्युक्तम् । कथं तर्हि गौरयमिति तुल्यो निर्देशः शब्दार्थयोः । अस्त्ययं निर्देशः स तु नाध्यासकृत इति ग्रन्थे वक्ष्यामः । यौनादयस्तु सम्बन्धाः शब्दस्यानुपपन्ना एवेत्यनभ्युपगमं दर्शयति । योऽत्र व्यपदेशः सम्बन्धस्तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य संज्ञासंज्ञिसंबन्ध इत्यनेनौत्पत्तिकत्वं पुनरुपोद्बलयति । आह यदि प्रत्यायकः शब्दः प्रथमश्रुतः किं न प्रत्याययति स्वतो हि सर्वभावानां प्रवृत्तिं चक्षुरादी-नामिव रूपग्रहणे तस्मात् सापेक्षत्वं शब्दस्यार्थप्रतिपत्तावस्तीति प्रथमश्रुतः किं न प्रत्याययतीत्युक्तम् । सर्वत्र नो दर्शनं प्रमाणमिति स्वाभाविकानां सापेक्षत्व-दर्शनादेवावगम्यते दृष्टं हि चक्षुरादेः स्वाभाविकत्वेऽपि रूपावगतावपेक्षित्वं दहने चानपेक्षित्वमग्न्यादेस्तदिदमुक्तं सर्वत्र नो दर्शनं प्रमाणमिति । दृष्टं हि कार्यं पुरुषप्रयत्नानपेक्षं पुरुषानुपलब्धेः सापेक्षं च प्रथमप्रयोगानवगतेः प्रयो-गान्तरे चावगमात् यदि प्रथमः श्रुतो न प्रत्याययति कृतकस्तर्हीति कोऽभि-

प्रायश्चोदकस्य यदि तावत् कृतकः कार्यो न सामयिक इत्यभिप्रायः ततः सिद्धं साध्यते पुरुषान्तरप्रत्ययान्तरानपक्षेता शाब्दं प्रमाणमिति वदतोऽभिप्रेता चक्षुरादीनामिव रूपग्रहणे न पुनरुत्पत्तिमत्तापि नेष्यते । उत्पद्यत एव हि सम्बन्धः क्रियागर्भत्वात्तस्य क्रियायाश्चोत्पत्तिमत्त्वात् तदनु सम्बन्धोत्पत्तिमानेव । अथ कृतको रज्जुघटयोरिव पुरुषयत्नजन्य इत्यभिप्रायः तदयुक्तम् चक्षुरादेरालोकाभावे कदाचित् कार्यमकुर्वतः तत्सद्भावे कार्यं कुर्वतोऽपि पुरुषान्तरप्रत्ययान्तरानपेक्षित्वात् संबन्धस्य । तथा शब्दस्यापि सम्बन्धः स्यादिति । तस्मादसमर्थमिव सिद्धान्तलङ्घने भाष्यं प्रतिभाति कृतकस्तर्हीति । नेदमसमर्थम् ।

अयमस्याभिप्रायः । नेदमुद्योतादितुल्यम् । उद्योतस्याप्यनुग्राहकत्वं कार्यसमधिगम्यमेव अनवगतिपूर्वकत्वादवगतेश्चक्षुरादीनां शब्दे पुनरर्थावगतिपूर्विकैवार्थावगतिर्ह्ययमस्यार्थ इत्यवगम्यमानं ततः शब्दादर्थं प्रतिपद्यते तस्मात् सम्बन्धान्तरपूर्विकैवार्थावगतिरिति सापेक्षता तदिदं कृतकशब्देन सामयिकत्वं कृतकता वोक्ता ।

अथ गौरित्यत्र कः शब्द इति कोऽयं प्रश्नः अयमयं प्रश्नः यद्यपरिणत्या शब्दोऽर्थमवगमयति कस्तर्हि शब्दोऽभिप्रेतः यः श्रोत्रेणावच्छिद्यते स शब्दः ओमित्युच्यते श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । ते च श्रोत्रग्रहणाः गकारौकारविसर्जनीयाः ।

नन्वेवमर्थप्रत्ययो नोपपद्यते क्रमवर्तित्वाद्वर्णानां क्षणिकत्वाच्च तदुपलब्धेः । उपलभ्यमानतया च पदादिव्यवस्था न सन्मात्रतया तस्मादनुपपन्नोऽर्थप्रत्ययः ।

अथायमभिप्रायः उपलब्धिविनाशेऽपि हि तत्स्मृत्यनुग्रहादर्थावगम इति सापि न सर्वविषयिणी उपलब्धिवदुपलब्ध्यनुसारिणी हि सा अतो यथार्थावगतिर्न घटते । तस्मात् शब्दतत्त्वमेवेदमर्थरूपतया विवर्तत इत्युक्तं शब्दविद्भिः । किं चाविवर्तीपक्षे श्रोत्रादिव्यापारनिरपेक्षैव स्वरूपेऽर्थे चाथावगतिः शक्यते वक्तुम् बाढम् शब्दादयः श्रोत्राद्यवच्छेदेनैकरूपा अप्यनेकरूपतया प्रतिभान्ति मरकतपद्मरागादिषु मुखमेकमनेकमिव प्रतिभाति ।

ननु च खड्गादिष्वेकं ग्राहकं उपाधयो हि खड्गादयः । तदेकग्राहकवशादेकं मुखमिति शक्यते वक्तुम् । भेदाश्चोपाधिनिबन्धनाः । अत्र पुनः

किमेकं ग्राहकं शब्दादेः यद्वशात् श्रोत्राद्युपाधिकृतो भेदः एकमेवेदं वस्त्विति वर्ण्यते किमिदं प्रलप्यते एकग्राहकवशादेकं वस्त्विति एकत्वादेव ह्येकत्वम् ।

ननु चोक्तमेकत्वमेव न प्रतीयत इति श्रोत्रादयो हि प्रतीतेः कारणान्तरे च भेदेनैव प्रतीतिमुत्पादयन्ति प्रतीतिभेदे सत्येकं वस्त्विति दुर्वचः । कथं तर्हि खड्गादिषु तदेवेदं मुखमिति बिम्बाकारप्रत्यभिज्ञानात्तदुपाधिनिबन्धनो भेद इति शक्यते वक्तुम् उक्तं तर्हि त्वयैवैकत्वं प्रत्यभिज्ञानादेकत्वमिति अस्ति चेदमेकत्वं शब्दादावपि गौरयम् शुक्लोयं सुरभि चन्दनमिति । तस्माद-त्राप्येकतया प्रत्यभिज्ञानात् श्रोत्राद्युपाधिनिबन्धन एव भेद इत्युपपन्नम् । श्रोत्रादिभेदः किंनिबन्धनः विषयभेदप्रतिपत्तिनिबन्धन इति वदामः । विषयभेदप्रतिपत्तेः किं निबन्धनम् श्रोत्रादिभेद इत्युक्तम् । एवं सतीतरेतरा-श्रयतोक्ता भवति बाढमुक्ता अविद्यामातृकेयम् अत एवाविद्येत्युच्यते बुधैः । तस्माद्विवर्त एवाश्रयणीयस्तत्त्वविद्भिरवगतेः कारणं तस्मादशब्दज्ञो देवानां प्रियः यो हि युतसिद्धयोः शब्दार्थयोः सम्बन्धमर्थावगतौ कारणं मन्यते पूर्ववर्ण-जनितसंस्कारसहितोन्त्यो वर्णो वाचक इति । कोयं संस्कारो नाम यदि तावद्वर्णावगतिः प्रयुक्ता स्मरणमपि तथैव । अथ स्मृतिकार्यान्यथानुपपत्त्या कश्चित्पदार्थः कालान्तरावस्थायी विद्यत इति कल्प्यते असावपि प्रतिवर्णविषय एव शक्यते कल्पयितुम् एकैकवर्णविषयत्वादुपलब्धेः तदनुसारित्वाच्च (ताच) स्मृतेः तत्कार्यत्वाच्च संस्कारस्य तस्माद्वर्णोपलब्धिवदसावपि न कारणम् । न च स्मृतिविज्ञानशून्यः संस्कारोऽस्तीति प्रमाणमस्ति । दर्शयति च प्रत्येक-वर्णविषयमेव संस्कारं पूर्ववर्णजनितसंस्कारसहितोन्त्यो वर्णः प्रत्यायक इति ब्रुवन् । तस्मादुपलब्धिस्मृतिभ्यः किमभ्यधिकमस्यार्थप्रतिपत्तौ सामर्थ्यं मन्यते भाष्यकारः स्फोटवादिनो वा कथमित्येतदप्यनुत्तमरं न ह्यभ्युपगतिरर्थसिद्धौ हेतुः तस्मादुपवर्णनीयोयं ग्रन्थः । अथ कालान्तरावस्थायितैव विशेषः तन्न परस्परासम्बन्धे हि किमवस्थितिः करिष्यति अथार्थाप्रतिपत्तिरेव सम्बन्धे हेतुः एवमितरेतराश्रयः प्राप्नोति भवत्विति चेन्न तत्त्वावगमो युक्तोऽयमभ्युपगमः । कथं तर्हि बीजाङ्कुरादिषु दर्शनादिति यद्युच्यते तत इहापि दर्शनं शक्यते वक्तुं न विवर्तप्रतिपक्षसम्भवादर्थावगतिर्हि कारणमात्रस्य हेतुतां प्रतिपद्यते न संस्कार-सम्बन्धस्यैव बीजाङ्कुरादिषु विशेषदर्शनादुपपन्नम् । इह त्वानुमानिकत्वात् संस्कारस्य विशेषोपलब्धिर्नोपपद्यते तस्माद्विवर्तमेवोपपन्न[तरं] मन्यामहे । अत

एव तदप्ययुक्तम् । किमयुक्तम् सा च शब्दकल्पना चेति कथमयुक्तम् विवर्तपक्षे हि का नामेयं शब्दकल्पना यस्मादध्यासितोपाधि सर्वप्रमाणावगम्यमेकं वस्त्वित्युक्तम् तस्मादशब्दज्ञतैवेयं यद्युत सिध्योरपि शब्दार्थयोरौत्पत्तिकः सम्बन्धोभिधीयते ।

नन्वेकत्ववादिनोपि नैवायं विभागः शक्यते वक्तुम् । ज्योतिष्टोमोऽयं दर्शपूर्णमासाविमाविति । एकत्वे हि न वाक्यैकत्व एवावस्थितिः सर्ववाक्यानामेकवाक्यता प्राप्नोति वर्णानामिव पदे पदानामिव वाक्ये एकत्वावगमाद्वा भवति हि सर्ववाक्येषु शब्दः शब्द इत्येका बुद्धिः सर्ववाक्येषु च शब्दार्थः शब्दार्थ इति । तदिदमभिन्नमेव ज्योतिष्टोमादि कर्मजातं प्राप्नोति । दृश्यन्ते चाधिकारिभेदाविरुद्धाश्चाविरुद्धाश्च । विरुद्धाविरुद्धमूलाः अविरुद्धाः विरुद्धफलाः तत्र विरुद्धा कृष्णलचरुसर्वस्वरादयः । अविरुद्धाश्चाग्निहोत्रादयः । न चैतदेकत्व उपपद्यते सत्यं नैकत्व उपपद्यते । भिन्नार्थानि भिन्नार्थैकार्थानि चैतानि वाक्यानि एकार्थप्रतिपत्त्यर्थो चैकता न चत्रैकार्थतावसीयते तस्मादेकस्मिन् वाक्ये पदवर्णापलापो युक्तो वाक्यान्तरे किंकृतो वाक्यान्तरस्येति तस्मान्नेयं विरुद्धाविरुद्धचोदनोपपद्यते । शब्दप्रामाण्यवादिनो ह्यर्थसम्बन्धः शब्दः शब्देनोच्यते न काकवाशिताद्यपि श्रोत्रग्राह्यम् ।

ननु श्रोत्रादिभेदमुपवर्णयता सर्वमेवमविद्याजालमित्युक्तम् । किमिदमिदानीमर्धजरतीयमुपन्यस्यते वाक्यवाक्यार्थयोर्भेद एवेति । अनभिप्रायज्ञो देवानां प्रियः ब्रह्मण्यसावभेद उक्तः तद्रूपतया केन वा(क्य)भेदोऽभिधीयते शास्त्रावगतौ च केन वा भेदोपह्नोतुं शक्यते श्रोत्रादीनामिव सत्यं नापह्नूयते अविद्या (द्यां) प्रप्नोति विद्या चेष्यते वैदिकोर्थः कथमविद्यातोभ्युदयः शक्यते वक्तुम् अविद्या हि प्रत्यवायस्य निमित्तम् । सत्यं यथा भवानाह । प्रत्यवायस्त्वापोक्षकं सर्वं हि क्षयि प्रत्यवायायैव किन्तु प्रत्यवाय एवैकत्र स चोपायश्चान्यत्रेति विशेषः । तस्मान्न किञ्चिदत्र पूर्वं परेण सबध्यते ।

ननु च वाक्यार्थयोर्भेदेऽपि (काम्यो)कर्मोत्पत्तिवाक्यैर्गुणवाक्यानां कथमर्थत एकता शक्यते वक्तुम् । उक्तं भिन्नत्वऽप्येकानुष्ठानसिद्धिरिति नित्यकाम्यप्रयोगयोरिव तस्मात् सर्वमुपपन्नम् ।

स्यादेतदेवं यद्येका बुद्धिः स्यान्न ह्यत्रैका बुद्धिरस्ति । ननु च सर्वशब्देषु शब्दः शब्द इत्येका बुद्धिरस्ति असत्या चैकबुद्धौ शब्दशब्दवाच्यता न स्यात् । सर्वशब्दानामेकनिमित्ता(तया)ह्येकशब्दवाच्यता न पुनरेकताकृता अत्र चैकं निमित्तमस्ति श्रोत्रग्राह्यता । श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्धः । किं पुनः कारणं श्रोत्रग्राह्यतैवात्र गृह्यते, न पुनर्गोत्ववच्छब्दत्वमेवाश्रीयते सामान्यविशेषविषयमज्ञानमत्रापराध्यत एवं चोदयतः । किं पुनः सामान्यविशेष-विषयमज्ञानम् इदमिदमज्ञानं यस्मिन् पदार्थग्रहणे सति वर्णान्तरावमर्शो भवति तत् सामान्यम् । न (च) गरादिष्वेकवर्णग्रहे सति वर्णान्तरावमर्शो भवति (कार) पाचकादिष्विव, तस्मात् क्रियानिबन्धनैवेयं शब्दशब्दवाच्यता । कस्यायं विवर्तः कस्य च श्रोत्रादय उपाधितामामवते तुस्माद्विडम्बनैषा विवर्ततेऽर्थ-भावेनेति । तस्मात् कार्यत एव सम्बन्धोऽपि कल्पनीयः । संस्काराणां नोपलब्धि-स्मृत्योः अनवस्थितेः । यदप्युक्तमयुक्तं सा च शब्दकल्पनेति तत्रार्थापरिज्ञान-मेवापराध्यते । इदं हि तत्रोच्यते । परमार्थस्योपाधिकल्पना, अविद्यमानस्य च कल्पनेति । तदिदं सा शब्दकल्पना चेति । सुरभिचन्दनानामाकृतिग्रन्थे परिहारं वक्ष्याम इत्युक्तम् ।

ननु च शब्दादर्थं प्रतिपद्यामह इत्येतदिदानीं लौकिकं वचनं नोपपद्यते । किं च गकारादयो न शब्दाः । शब्दास्ते न शब्दः शब्दादिति चैकवचनं पदाभिप्रायम् । न चैतत् पदमस्तीत्युपपन्नैवेयमनुपपत्तिः । तथा च शास्त्रकारैरपि पदाभिप्रायणैवोपन्यस्तं पूर्वापरीभूतं भावनाख्यातेनाचष्ट इति । कामं मोपपादि । अनुपपन्नार्थमपि हि लौकिकं वचनं दृष्टम् । दश दाडिमानि षडपूपा इति । लोके चानुपपन्नार्थमेव किञ्चित् प्रयोगं दृष्ट्वा व्याकरणादिशास्त्रं नियमाय प्रवृत्तम् । इह पुनर्नैवानुपपत्तिः । समुदायस्य निमित्तत्वात् कार्यैक्याच्चैकत्वोपचारः । तस्मात् शास्त्रकारवचनमप्यनयैव युक्त्योपपन्नम् । पदवाक्यनिर्देशश्च । गौःपदम् अश्वःपदं लौकिकं वाक्यं वैदिकं वाक्यमिति च । तस्मात् गकाराद्येव पदं स एव शब्दो नान्य-द्व्यतिरिक्तमस्तीति सिद्धम् ।

अथ गौरित्यस्य शब्दस्य कोऽर्थ इति नायं प्रश्न उपपद्यते । अथ गौरित्यत्र कः शब्द इति युक्तं वर्णपक्षेऽपि हि वाचकता

नोपपद्यत इत्याशङ्कानिराकरणाय । अभिधेये हि न कश्चिद्विशेषः । आकृतिः व्यक्तिः गुणो वा भवतु ह्यौत्पत्तिकत्वे कश्चिद्विरोधः । अस्थायी चायं पक्षो नायं राद्धान्ते यदुताकृतिवचनतैव सर्वशब्दानामिति गुणवचनताप्यरुणादिषु दृष्टा व्यक्तिवचनतोद्भिदादिषु । तस्मात् प्रश्नस्तावन्निष्प्रयोजनः । उत्तरमपि राद्धान्तविरुद्धम् । अथायमभिप्रायः उदाहरणाभिप्रायमिति अत्रापि प्रश्नस्ताव-न्निष्प्रयोजन एव उत्तरमपि यदि शब्दस्य व्यक्तिरर्थः अथापि सामान्य-सम्बन्धे किं विशेषः । विशेषविवक्षायां च प्रयोजनं वक्तव्यम् । अथेदमुच्यते । व्यक्तिपक्षे हि सम्बन्धस्य सापेक्षता प्राप्नोतीति का कथा पाचकादिषु तत्र क्रियोपलक्षणमिति चेदिहाप्याकृतिर्भविष्यति । तत्र ह्यभिहिता क्रिया धातुभागेन इह त्वनभिहिता जातिः नालमुपलक्षणायेति चेत् कल्प्यतामभिधानं न पुनः सापेक्षताभिधाने उपयोगमस्य पश्यामः निरपेक्षताभिधाने वा । तस्मान्मन्दप्रयोजनता प्रश्नोत्तरयोः । अत्रोच्यते । वाचकरूपैव सर्ववाक्येष्ववगतिरिति मन्वानः शब्दा-र्थयोर्भेदो नोपपद्यते इति पृष्टवान् पूर्वपक्षवादी । इतरस्तु अविवेकोऽस्य प्रयोगे अभिधाने च प्रायौगिकीं बुद्धिमभिधेयेऽध्यवस्यतीति तदपनुत्तये सास्नादिविशिष्ट-आकृतिरित्युक्तवान् । प्रदर्शनार्थं चैतत् अभिधानवत् । न त्वाकृतिः साध्यास्ति वा न वेति अभिधेयतया शब्दरूपतां न जहातीत्युक्तवान् ।

ननु च तद्रूपापत्तावभावाभिधाने किं प्रयोजनम् । अभिधेयाभिप्राय एवाय-मभाव उक्तः न स्वरूपाभिप्रायः । न प्रत्यक्षा सती साध्या भवितुमर्हतीति । यदि परं स्वरूपस्यैवाभावः साध्यते तदैवानभिधेयता । न चाभावः शक्यते वक्तुं प्रत्यक्षगम्यत्वात् । व्यामोह इति चेदिति केन चोक्तं स्वरूपेणैवास्य भाव इति इतरस्तु तमेवाभिप्रायं बुद्धौ कृत्वा नासति प्रत्ययविपर्यासे व्यामोह इत्युक्तवान् । असत्यप्यर्थान्तरे एवंजातीयके भवति प्रत्ययः पङ्क्तियूथमिति यथा इति चेदिति अभिधेयतयाभावं प्रकटयति । नैवायं प्रत्यक्षविरुद्धोऽर्थोऽभिधीयते आकृतेरभावः । किं तर्हि अभिधेयरूपतया अभिधानरूपमवगम्यत इत्युक्तं न चेदमविवर्तवादिन उपपद्यते तस्माद्विवर्तपक्षः श्रेयानित्यभिप्रायः । असम्बद्ध-वचनमुपन्यस्तमिति पङ्क्त्यादावपि नैव शब्दरूपावगतिरस्तीत्यभिप्रायः । कथं तर्ह्येकप्रत्ययः न च शब्दा पङ्क्त्यादिषु एकमुपलभ्यते किञ्चिदस्ति चायं एकप्रत्ययः । तस्मादध्यासनिबन्धन एवायं किमसति वने वनप्रत्यय इति असति वृक्षव्यतिरिक्त एकस्मिन् वनाभिधेयेऽर्थे एकप्रत्ययो नोपपद्यते इति किं

प्रत्यक्षगम्या वृक्षा अपि न सन्तीति शक्यते वक्तुम् । कोऽभिप्रायः । वृक्षा एवात्रैकतया प्रतीयन्ते । न पुनर्वनशब्दरूपता गम्यते । अथायमभिप्रायः वृक्षा अपि नैव सन्तीति तदपि हि शब्दाध्यस्तमेव रूपमिति प्रत्युक्तः स माहायानिकः पक्षः । अर्थविषया हि प्रत्यक्षा संविन्न बुद्धिविषयेत्युक्तम् । बुद्धि-विषयत्वे वा संविदः किं सिध्यति शब्दाध्यासः । अन्यैव वृक्षे संवित् अन्या वनसंवित् । तस्माद्बुद्धिविषया वा भवत्वर्थविषया वा सर्वथा वनशब्दरूपता नास्तीत्येतावद्वक्तव्यम् अतः प्रत्यक्षमेवाक्षिप्यत इत्येवमादेर्ग्रन्थस्यासंबद्धतैव प्रति-भाति । तस्मादाकृतिसद्भाव एवाक्षिप्यत इति लक्ष्यते । मैवं वनशब्दकार-त्वादिना हि भिन्नरूपावगतिरेवोत्तरम् । सा च वृक्षरूपाद्भिन्नैवात्र प्रतीयते । यदि परं तदभावादप्रतीतिः स चाभावः प्रत्यक्षे प्रत्यर्थिनि नोपपद्यते ।

ननु विज्ञप्तिः प्रत्यक्षेऽयेनदुपपद्यत इत्युक्तं न भेदावगतेः परिकल्पना-पक्षपातित्वात् तस्मात् सुष्ठु प्रत्युक्तः स माहायानिकः पक्ष इति ।

नन्विदानीमेकबुद्धिरनालम्बनैवेयं प्राप्ता । अथ किमाकृतिसद्भाववद्युपा-लभ्यते सिद्धान्तान्तरं तु दुष्यति वनेपि ते असति वनप्रत्ययः प्राप्नोतीति । कः पुनरत्र सिद्धान्तो यो दुष्यति एकस्मिन् वर्तमानात् प्रातिपदिकात् एकवचनमिति बहवश्च वृक्षाः तत्रेदं प्रातिपदिकम् इत्युक्तमायुष्मता । यथैवाकृतिरस्तीति भवति राद्धान्तः तथैवायमपि तदिदं राद्धान्तदूषणं भवति प्रमाणान्तरमूलत्वात् स्मृतेः । यदि दूषणं भवति भवतु नाम न ह्यभ्युपगमदूषणाद्धेतोरदुष्टदुष्टता शक्यते वक्तुम् अदुष्टोऽयं हेतुः प्रत्यक्षावगतिर्नाम । तस्माद्यद्येकत्वमन्तरेणाप्येकवचनं किं कुर्मः कमुपलभेमहि । न चायमुपलम्भस्याविषयः । एकस्मिन्नेकवचनमिति प्रायिकमेतत्, दर्भादिषु व्यभिचारात् प्रायोगिकमिदमेकवचनं नान्वयिकम् । अतः सिद्धान्तरापरिज्ञानमेवात्र गर्हणीयम् । तस्मान्न क्वचित् शब्दाध्यस्ता वाक्ये बुद्धिरस्तीत्युपपन्नं जैमिनेर्वचः आकृतिः शब्दार्थ इति । आकृतिप्रति-पत्तिमुखेन गोशब्दादीनां निमित्तमिति तत्राकृत्यधिकरणे निपुणतरमुपपादयिष्यति ॥

अथ सम्बन्धो यच्छब्दे विज्ञायते । कः पुनरयं सम्बन्धः दृष्टश्चा-पन्यस्तश्च पूर्वोक्त एवेति वदामः । ननु चासौ संज्ञासंज्ञिसम्बन्धः तस्मादन्य एवायं सम्बन्ध इति मन्यते तदयुक्तम् तत्रापि प्रत्याय्यस्य प्रत्यायकस्य च यः संज्ञासंज्ञिसम्बन्धलक्षणसंबन्ध इति स एवायं ज्ञाप्यज्ञापकलक्षणः सम्बन्ध उक्तः ।

ननु प्रत्याय्यस्य प्रत्यायकस्य च संश्लिलक्षणः सम्बन्ध इति वदता— प्रत्याय्यप्रत्यायकस्य इति षष्ठ्यभिधानेन सम्बन्धान्तरमुक्तं भवति । नैवम् । तदेवेदं प्रत्याय्यप्रत्यायकत्वं संज्ञासंज्ञिलक्षणमिति षष्ठ्या प्रतिपादितं कुत एतत् ननु व्यतिरेकं षष्ठी प्रतिपादयति अस्त्येवात्र हेतुहेतुमत्तया व्यतिरेकः प्रत्याय्यप्रतिपदिकत्वं संज्ञासंज्ञिलक्षणसम्बन्धस्याभिधाने निमित्तम् अन्यथा प्रत्याय्य-प्रत्यायकोपन्यासोऽनर्थकः । तमेकं न व्यपदिशति भवान् यः संज्ञासंज्ञिलक्षण इति वक्तव्यम् । अत एव कृतक इति पूर्वमुपपादितमित्यनेन ग्रन्थेन पूर्वोक्तस्यायमुपन्यास इति प्रकटयति किं पुनः कारणं पुनः प्रश्नोपन्या-सयोरिदमत्र कारणं विवर्तोऽसौ हि युतसिद्धयोरनपेक्षत्वं न शक्यते वक्तुमिति मन्वानस्य प्रश्नः शक्यते वृद्धस्य व्यवहारस्यानादितयानपेक्षता वक्तुमिति तस्यैवोपन्यासः कृतक इति पूर्वोपवर्णितेनैवाभिप्रायेणोक्तं तस्मान्मन्यामहे केनापि पुरुषेण शब्दानामर्थैः सह सम्बन्धं कृत्वा संव्यवहर्तुं वेदाः प्रणीता इति सापेक्षत्वमुपसंहृतम् । तदिदानीमुच्यते अपौरुषेयत्वात् सम्बन्धस्य सिद्धमिति वृद्धव्यवहारस्यानादिताभिधानोपन्यासः किमिदं तर्हि प्रश्नोत्तरं कथमिति पृष्टे पुरुषस्य सम्बन्धुरभावादित्युत्तरमयुक्तम् अनादिप्रतिपक्षनिरा-सायेदमुच्यते । कथं पुनरिदं प्रतिपक्षतया शङ्क्यते । बाढं शङ्क्यते । अनादिनापि वृद्धव्यवहारेण शब्दार्थावगमसिद्धौ यत्र कर्तोपलभ्यते तत्रादिमत्त्वैव बलात् प्राप्नोति वृद्धिरादैजितिवत् । तस्मात् कर्तुरुपलम्भो निराकरणीयः । कथं सम्बन्धो नास्तीत्यस्य प्रश्नस्य किमिदमुत्तरमुपपद्यते प्रत्यक्षस्य प्रमाणस्याभावात् तत्पूर्वकत्वाच्चेतरेषामिति कथं नोपपद्यते अनुमानादेरपि प्रमाणत्वाभ्युपगमात् तत्पूर्वकत्वं चायुक्तम् । शब्दस्य सापेक्षत्वं प्रसङ्गात् क्रियादिषु चाननुमेयता-पत्तेः । सापेक्षत्वे च शब्दस्योत्पत्तिकत्वप्रयासोऽनर्थकः । तदिदमापतितं घोटा-रूढस्य विस्मृतो घोट इत्यभिप्रायानभिज्ञस्यैतत्राद्यं केवलानुमानागमप्रमेयता तावन्न संभवत्यनादौ वृद्धव्यवहारे प्रत्यर्थिनि तस्मात् प्रत्यक्षं तत्पूर्वकं चागमानुमानं निरसनीयमिति तस्मादुपपन्नमुत्तरं बहुवचनमिदानीं किमर्थमितरेषामिति इतरयो-रिति वक्तव्यं द्वयोराशङ्कनीयतोपन्यासादसम्भवस्तु सर्वेषामेवेत्युपपन्नम् ।

ननु चिरवृत्तत्वादित्यसिद्धतामाह । कथमसिद्धता पूर्वजानां प्रत्यक्ष-विषयतोपपत्तेः । न हि चिरवृत्तः सन् स्मर्येतेति । न पूर्वकजानामपि प्रत्यक्ष-मत्र संभवतीत्यभिप्रायः । यदि स्यात् पाणिनिवत् स्मर्येत न च हिमवदादिषु

उक्तापरामादिक्स्मरणं भवितुमर्हति । तत्रास्मरणे हेतुरुपपद्यते पुरुषवियोगादिः । न च पुरुषवियोगः शब्दानामस्तीति किमभिप्रेतं कृतकपक्षे हि तत्प्रामाण्यात् प्रामाण्यं स्यात् । न निष्प्रयोजनतया विच्छेदः स्मरणस्योपपद्यत इत्यभिप्रायः । तच्च पाणिनिपिङ्गलोपन्यासेन प्रकटितम् ।

यद्यपि च विस्मरणमुपपद्यते तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि यथा विद्यमानस्यानुपलम्भो भवतीति नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्येमहि यद्यपि च विस्मरणमुपपद्यत इति किं विषयनिर्दं विस्मरणमुपन्यस्तं यदि तावत् साध्यविषयं तदिदमत्र प्रमाणं यदुत विस्मरणोपपत्तिः किञ्च विस्मरणमुपपद्यत इति तथा न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहीत्यहेतुः । यदप्युच्यते विद्यमानस्याप्यनुपलम्भनं भवतीति तावता विना प्रमाणेन शशविषाणं प्रतिपद्यामह इति इदमप्ययुक्तम् । यदि विद्यमानस्यैव अनुपलब्धिः केन शक्यते वक्तुम् शशविषाणं प्रतिपद्यामह इति शशविषाणं नास्तीति ।

अथायमभिप्रायः यद्यप्यन्यत्र विस्मरणोपपत्तिर्दृष्टा नैतावतान्यत्रापि विस्मरणोपपत्तिः शक्यते वक्तुमिति असदभिप्रायोऽयम् । बाढमन्यत्र दृष्टमन्यत्र भवतीत्युच्यते । अयमेव हि सामान्यतो दृष्टस्य विषयः । अत्राभिधीयते । नैवेयं प्रमाणतयोपन्यस्यते विस्मृतिरनुपपत्तिर्वा किं तु उपलभ्यस्यार्थस्य कारणदोषनिराकरणायेदमुपन्यस्यते इह पुनर्भवता उपलब्धा तत्रेदमुपन्यस्तमित्यसम्बद्धमित्युक्तं यथा घटादेरुपलब्धस्यानुपलब्धिरस्तीति नैतावता शशविषाणस्यास्तित्वं शक्यते वक्तुम् । उपलब्धिविषयस्यानुपलब्धिः कारणान्तरमपेक्षते । अनुपलब्धेः पुनरनुपलब्धेरेवानुपलब्धिः । तस्मात् सूक्तमिदम् ।

नन्वर्थापत्त्येति किमियं प्रमाणसंज्ञोपन्यस्ता । ओमित्युच्यते किं पुनरनुपपद्यते इत्यनया परिगृह्यते नवसंबन्धस्य कर्ता कथं पुनरसौ नोपपद्यते प्रथमश्रवणेर्थानवगतेः यदि प्रथमश्रवणेर्थो न प्रतिपद्यते किमायातं संबन्धस्य कर्तुरेव तर्हि यदि गृहे देवदत्तो नोपलभ्येत किमायातं बहिर्भावस्य । न ब्रूमो बहिर्भावो नोपपद्यत इति किं तर्हि विद्यमानता नोपपद्यत इत्युक्तम् । सैवेयं बहिरस्तीति संवित् इह पुनः प्रथमश्रवणानवगतेः संबन्धस्य कर्ता न: संबन्धो दृष्टः ।

अथेदं मनसि वर्तते न च प्रथमश्रवणात्प्रतिपद्यते प्रतिपद्यते च द्वितीयादिश्रवणात् । तस्माच्छब्दादन्यकरणान्तरमृग्यमिति कार्यतस्तर्हि कारणानुमानमुक्तं कथं तर्ह्यर्थापत्त्येति अर्थादनुमानापत्तिरित्यर्थः तस्मात्कार्यादर्थादित्युक्तम् ।

ननु चानुमानमपि नोपपद्यते प्रथमश्रवणादप्रतीतेरनेकान्तात् वेदवाक्यादेव प्रथमश्रुतादवगतेः ।

ननु च पदगतेयं चिन्ता किमिदं पदं नाम गवादयो देवदत्त गामभ्याजेत्येवमादिषु वाक्येषु किं कार्यान्यतया प्रसिद्धा उत वाक्यार्थावगतिरिव कार्यम् । बाढं कार्येन्यतया प्रसिद्धाः । कस्मिन्व्यावहारकेन वृद्धा व्यवहरन्ति देवदत्त गामभ्याज शुक्लामित्येवमादिना । एवं तर्हि वाक्येनार्थे व्यवहारः न हि व्यवहाराप्रसिद्धोऽर्थ कार्यान्तरतया शक्यते वक्तुम् । कथं तर्ह्यथ गौरित्यस्य शब्दस्य कोऽर्थः सास्नादिविशिष्टा आकृतिरिति चोत्तरम् असति कार्यान्यत्वे कथं वा वृद्धव्यवहारेणास्य औत्पत्तिकत्वाभिधानं तस्मात्प्रतिज्ञासाधनयोः यथैकवाक्यता भवति तथायं ग्रन्थो वर्णनीयः । स तु तद्भूताधिकरणे स्वयमेव भाष्यकारेण वर्ण्यते इत्युपरम्यते । कथं तर्ह्यनैकान्तिकपरिहारः । निमित्ताभिप्रायेणोच्यते । अप्रतिपन्ननिमित्तं प्रथमश्रुतं न प्रतिपद्य.... तस्माच्छब्दादन्यन्निमित्तान्तरमस्तीत्यभिप्रायः । कः पुर्वाचकनिमित्तयोर्भेदः । इदमर्थमेव हि तद्भूताधिकरणमारभ्यत इत्यलमतिप्रपञ्चेन । न सिद्धवदुपदेशादिति किमिदं सिद्धवदुपदेशादिति इदमिदं चात्र कर्त्रा शक्यते कल्पयितुम् । वृद्धव्यवहारस्यानादिमत्त्वात् अत औत्पत्तिकः संबन्ध इति सिद्धम् । किमिदमन्यथैव प्रक्रान्तमन्यथैवोपसंहृतं शब्दादेवार्थावगतिरिति प्रक्रान्तम् वृद्धव्यवहारादित्युपसंहृतम् । तदिदमन्यत्राहितमन्यत्रैव निपतितं वृद्धव्यवहारादर्थेऽवगम्यमाने नैव शब्दादवगतोऽर्थो भवति । हस्तसंज्ञादिभ्य इव हस्तसंज्ञादयोऽपि वृद्धव्यवहारं प्रसिद्धा एव नार्थेन संबद्धा इति व्युत्पत्तिरेव ह्यर्थावबोधकारणं न हस्तसंज्ञादयः व्युत्पत्त्युपाधयो... तस्मादुपाधिः शब्दो नार्थावगतेः कारणम् । कशाङ्कुशप्रतोदाद्यभिघातवत् अत एव च शब्दस्वभावज्ञैः उक्तं विवर्त एव च भेदवादिभिराश्रयणीय इति ।

अत्राभिधीयते किमनेन विवर्तपक्षपातेन प्रत्युक्तोऽयमेकत्वानुपलब्धेः । यद्येवं प्रत्युक्तं तर्हि वेदस्य प्रामाण्यमत्रोच्यते वृद्धव्यवहारव्युत्पत्त्यावगन्यमानेऽर्थे

शब्दादन्यत् कारणं किं वा मन्यते भवान् । ननु च व्युत्पत्तिमेव कारणतया मन्यामहे । नैवं शब्दार्थसम्बन्धविषया हि व्युत्पत्तिः न व्युत्पत्तेः शब्दार्थावगतिः व्युत्पत्तिरेव ह्यादिमती न पुनः शब्दार्थयोः सम्बन्धः तस्य विषयत्वात् । तस्मात् न सिद्धवदुपदेशादिति सम्यगभिहितम् ।

ननु कार्येऽपि सम्बन्धे वृद्धव्यवहारव्युत्पत्तिर्बालानामनुगुणैव कथमियं प्रतिपक्षतयाशङ्क्यते सत्यम् प्रमाणान्तरपरिहेये हि कार्ये व्याकरणादिव्युत्पत्तिरिवाविरोधः कथं पुनर्निरुणद्धि कल्पनां न चात्र प्रमाणान्तरमस्तीत्युक्तम् । किञ्चित् कार्ये हि सम्बन्धे कर्तुर्दुर्गमेषु देशेषु सम्बन्धकरणे न किञ्चित् प्रयोजनमस्तीति संव्यवहारार्थं हि सम्बन्धकरणं न दुर्गमस्थैः व्यवहारोपपत्तिः । किं च कार्यः सम्बन्धः सम्बन्धिशब्दादृते नोपपद्यते यदि कार्यार्थः सम्बन्धोऽभ्युपगम्यते कृतं कार्येण ।

ननु च व्युत्पत्तिरपि कार्यतामपेक्षत एव । कथमयमस्य वाचक इति एवमविज्ञातार्थस्य न शब्दादवगतिरुपपद्यते । न हि दृष्टेऽनुपपन्नं नाम व्यवहारमात्रादेव हि बालानामवगतिर्दृष्टा । तस्मात्प्रत्यक्षदृष्ट एवमुपपद्यमानेऽर्थे न कर्तुः कल्पनोपपद्यते । इदमपरं व्यवहारानौपयिकं कृते हि सम्बन्धे अदृश्यमानस्यार्थस्य देवतादेः सम्बन्धकरणं अशक्तिरतूपवर्णितैव । तस्मादौत्पत्तिकत्वात् सिद्धमनपेक्षत्वम् ।

अथ यदुक्तमनिमित्तं शब्द इति किमिदं चोद्यते परिहृतमेतदौत्पत्तिकत्वाभिधानेन सम्बन्धस्य कस्य वाप्यस्य परिहारोऽवगम्यते औत्पत्तिकतया किमिति नैवान्य उपन्यस्तं विद्यमानोपलम्भनतयैव हि विषयान्तराभावो नियोगस्य दर्शितः । सत्यम् । अत्रैवायमौत्पत्तिकत्वपरिहार उक्तः किन्त्वौत्पत्तिकत्वे विषयान्तरविवेको नोक्त इव प्रतिभाति तद्विवेकायेदं पुनरुपन्यस्यते । कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावादिति ।

ननु चानेन किं विषयान्तराभावात् प्रमाणान्तरविषयतया सापेक्षत्वात् तदभावे चाप्रामाण्यं दर्शितम् । इहापि तदेव किं पुनस्तदयुक्तमिव प्रतिभाति इदं तत् । प्रमाणान्तरविषयत्वे हि अनेन इदमित्यस्मिन् सति नियोगः । तत्र

चानुपलब्धेः स्फुटमेवाप्रामाण्यम् । न चास्मिन्नर्थे संभवति नियोगादेव नियोग-सिद्धिरिति शक्यते वक्तुम् । तदिदानीं निराक्रियते ।

स्यादेतदेवम् । यद्यौत्पत्तिकता न स्यात् साधिता चासौ ततः किमिदं ततो नानेनेत्यमुमर्थमपेक्षते नियोगः । प्रमाणान्तरावगम्येऽपि हि लौकिकेऽर्थे नैवं नियोगस्य साध्यसाधनसिद्ध्यपेक्षावसीयते । कारणदोषसंभावनानिराकरणाय निराक्रियते तस्मात् स्वातन्त्र्यं नियोगस्येत्यनेन विवेकः प्रदर्श्यते । पुरुषं हि नियुञ्जानः साध्यसिद्धिमवगमयतीति षष्ठे प्रतिपादयिष्यति । किमेवं सत्यनन्तरानुप-लब्धिर्निरस्ता भवति । बाढं निरस्ता न ह्यस्मिन् पक्षे क्रियाशक्तिनिरूपणात् तत्साध्यसिद्धिः । कथं तर्हि नियोगार्थवशात् । ततश्चास्मादस्य सिद्धिरित्येतावदव-गम्यते नानन्तरं व्यवहितं वेति । तत्रानपेक्षत्वं यत्ततः प्रतिपादितं किमिदं यदियं प्रमाणान्यभविष्यन्निति इदमेवेदम् ।

ननु उक्तमभावोऽपि प्रमाणाभाव इति किमतो यद्येवमेतदतो भवति पञ्च प्रमाणानीति नोपपद्यते शक्यते वा चतुर्भिर्नास्ति वक्तुं प्रमाणं तर्ह्यभावः प्रमाणं वा प्रमाणाभाव इति शक्यते वक्तुम् अभावस्य च प्रामाण्ये प्रत्यक्षादिविषयापेक्षिता विषये........तरवच प्रमाणान्तरविषयपरिच्छेदकतयैवास्य लक्षणाभिधानं व्यवहारान्यत्वं तु प्रतिपन्नमेव व्यवहारसिद्ध्यर्थश्चायमुपन्यासः न प्रमाणसिद्ध्यर्थः प्रमाणान्तराभ्युपगमे को दोषः न खलु कश्चिद्दोषः किं त्वप्रमाणं प्रमाणमित्युक्तं भवति । लक्षणग्रन्थश्चानादृतो भवति । अनपेक्षत्वं च सर्व-प्रमाणानां निराकृतं भवति । तस्मात् सिद्धं विषयान्तरं शब्दस्य । तत्प्रसिद्धौ च प्रामाण्यसिद्धिः । किमर्थं तर्हि पञ्चग्रहणं व्यवहारपञ्चकप्रदर्शनार्थं पञ्चशब्दे ह्यक्रियमाणे व्यवहारान्तरं प्रदर्शितं न स्यात् । अत एव चाफलवती शाखेति प्रत्यक्षमेव व्यवहारं मन्यन्ते । प्रमाणविषयावच्छिन्नश्चायं व्यवहारः न च प्रमाण-विषयावच्छेदो विषयान्तरतया शक्यते वक्तुम् । न च निषयमात्रावगमात् पूर्वं प्रमाणवच्छेदादृते नास्तीति व्यवहारोऽवकल्पते । तस्मात् सिद्धं व्यवहारान्यत्वम् । अत एव व्यवहारकाल एव पञ्चसंख्योपन्यासो न प्रमाणस्वरूपाभिधानकाले षट्संख्योपन्यासः । तस्मादत्रैव पञ्चसङ्ख्योपन्यासादवैतु भवान् अभाव-व्यवहारस्य भेदिका पञ्चसङ्ख्या न स्वरूपस्य प्रसिद्धिस्तु दत्तोत्तरा ।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तं स एष यज्ञायुधी यजमान इति प्रत्यक्षं शरीरकं व्यपदिशतीति अत्रापि शरीरकमित्यसिद्धं कस्तर्हि व्यपदिश्यते यस्यैतच्छरीरम् ।

नन्वेष इति व्यपदेशो न यस्यैष इति अभेदोपचार निबन्धनोऽयं व्यपदेशः मञ्चाः क्रोशन्तीतितिवत् । किमित्यौपचारिकः शब्दार्थो गृह्यते उच्यते । तथा ह्यवगतेः उक्ता ह्यर्थवादानामन्यपरत्वात् गौण्यवगतिः ।

ननु चान्यत्रोपलब्धौ सत्यां गोर्वाहीकस्य च गौणो निर्देश उपपद्यते गौर्वाहीक इति । न चात्र शरीरादन्यमुपलभामहे । मोपलभामहे इति कोसि-भिप्राय अयमेवाभिप्रायो नोपलभामह इति ।

ननु कार्यभूतैः प्राणादिभिरुपलभामहे । ननु शरीरमेव प्राणित्य यतीति च शरीरं नाम किमभिप्रेतमायुष्मतः । योऽयं चातुर्भौतिकः संघातः । न तर्हि शरीरकार्याण्येतानि अयावच्छरीरभावित्वादित्यर्थः । सत्यपि भूतत्वेऽनु-पात्तानां न रूपादय इवोपलभ्यन्ते किञ्च सुखादयश्च न भूतधर्माः शक्यन्ते वक्तुम् । परेन्द्रियग्राह्या हि भूतधर्मा रूपादयो भूतवदेव न सुखादयः तर्ह्यति-रिक्तस्यान्यस्येति किमत्र प्रमाणम् ।

ननु च कार्यमेतत् कारणादृते नोपपद्यते इतीदमेवात्र प्रमा निरस्ता च भूतानां कारणतेति सिद्धमन्यत्वम् । नैवं सिध्यति परस्परकार्यतयाप्युपपत्तेः । न हि यो यदुपलभ्यते तस्य तस्य सम्बन्धिना भवितव्यमिति यदुक्तं तदयुक्तमिव प्रतिभाति । यदुत्पत्तिमदृष्टं तत् कथं सम्बन्ध्यन्तरं नावगमयतीति हेतुमती-ह्युत्पत्तिस्थितविसभागहेत्वभिप्रायमेतत् न पुनरुत्पत्तिरहैतुकैवोक्ता । कथं पुनरिद-मवगम्यते विसभागहेत्वाभिप्रायमेतदिति न चन्द्रमसमादित्यं चेत्यत्र सम्बन्ध्यन्तर-मित्यन्तरशब्दश्रवणात् ।

नन्वन्यत्वेऽप्यन्तरशब्द उपपद्यत एव । सत्यमुपपद्यते । ननु कार्यमकारण-मिति शक्यते वक्तुम् । भवतु दुष्टता गन्धस्य न पुनर्दोष एवार्थान्यत्वे हेतुः । न सन्तानाभ्युपगमात् संभवति हि हेतुमद्भावनिबन्धना तस्माद्धि सभागहेत्वभि-प्रायमित्यवैहि । अतः सभागसन्ततिहेतुकमेवेदं कार्यजालं नात्र विसदृशोपलब्धौ प्रमाणमस्तीत्युपसंहृतम् । यदि च विसभागादतो नौत्पत्तिः स्यात् अव्यवस्थैव

स्यात् । अनयैव युक्त्या कर्तृशब्दार्थ इच्छा स्मृतिश्च प्रत्युक्ता । अन्यस्यादर्श-नादिति । न ह्यदृष्टेऽन्यस्मिन् विसभागे स्मृत्यादयो नोपपाद्यत इति शक्यते वक्तुम् । न हि दृष्टे उपपन्नं नाम तदिदमुक्तमनुपपन्नमिति नः क संप्रत्ययः किं पुनः कारणं सर्व एवामी प्रतिपत्तिहेतव आत्मन उपन्यस्य निरस्यन्ते भाष्यकारेण । एभिरनात्मन्यात्मबुद्धिः प्राप्नोति । सर्वप्रकारं चाज्ञानं निरसनीयम् । कथं पुनरमी हेतवोऽनात्मन्यात्मबुद्धिमुत्पादयन्ति यत्तायदिदमुक्तं प्राणादिभिरेन-मुपलभामह इति किमत्रायुक्तम् भूतगुणा ह्यमी न भवन्ति । अयावद्भूत-भावित्वादिति निरस्ते भूतसंबन्धे आश्रयित्वाच्च सम्बन्धितायामवगतायां चित्तचैत्तानां च स्वयमाश्रयित्वादात्मगुणा ह्येत इति नियुक्तमेवोक्तं कथमनेनात्मन्यात्मबुद्धिः शक्यते वक्तुम् तत् सुखादयोऽप्याश्रिततयोपलभ्यमाना अयावद्भूतभावितया च सम्यगात्मगुणतयोक्ता ।

अत्रोच्यते प्राणादयस्तावदयावद्भूतभावितयानै शक्यन्ते वक्तुम् । चलना-त्मका ह्यमी वायोश्चायं धर्मः सर्वत्र हि श्वसनादिचलनात्मकतैवोपलभ्यते । तस्माद-यावद्भूतभावित्वमसिद्धम् । सेयमनात्मन्यात्मबुद्धिः । येऽपि सुखादय उपन्यस्तास्तेऽपि भूतविकारहेतुत्वात् भूतगुणा एवेति शक्यते वक्तुम् । न ह्यगुणो गुणिनं विकर्तुमुत्सहते । अवस्था हि विकारः अवस्था चावस्थावतोऽवस्थान्तरोत्पत्तौ हेतुः न चावस्थावस्थावतोऽन्येति सिद्धं भूतं गुणत्वम् ॥

ननु चैवमेव वक्तव्यम् । किमित्युक्तं कामं सुखादय एव स्युरिति । अभ्युपगम्याप्ययमर्थो न सिद्ध्यतीत्यभिप्रायः कामाभिधानात् किं पुनरभ्युगमे कारणम् । इदमस्ति कारणम् ॥

अत्र केचित् प्रज्ञाभिमानिनो विप्रतिपन्नाः । केयमाश्रयाश्रयिता नाम संघातमात्रमेवेदमुपलभ्यते न ह्येकत्रोपलब्ध्याश्रयाश्रयिता भवति भूतानामिव परस्परम् । तस्मात् तेऽपि सुखादयः स्वतन्त्रा वाश्रयिणो वेत्यभ्युपगमात् प्रदर्शितम् ॥

अत्रापरे ब्रह्मविदः कर्त्रभिधानात् स्मृतेरिच्छातश्च महदादिभूतपर्यन्ता-च्छरीरातिरिक्तमात्मानमुपलभामह इति प्रतिपन्नाः कथं पुनरभिधानादेर्हेतुतोक्ता । तैर्ज्ञानात्मकं ह्यन्तःकरणं महदादि ज्ञेयं च कार्यं अतः कार्यकरणव्यतिरिक्तो

जानातीति शक्यते वक्तुम् । ज्ञानेन किमपि भावयेदिति हि प्रत्ययः । तस्मात् सिद्ध आत्मा कर्तृभूतः ।

नन्वसौ निष्क्रिय इत्यभ्युपगतम् । प्रत्ययस्य च कर्तरि जनातीत्ययं प्रत्ययः येषां तावदात्मनि ज्ञानं समेवैति तेषां तत्कारणत्वात् प्रत्ययकर्तृतापि सिद्धैव । येषां पुनः बुद्धिधर्मतयैव प्रसिद्धा ज्ञानादयः तेषामपि भोक्तृतयायं हेतुः कथमिच्छात दुरुक्ता एवमुक्ता अनुभूतपूर्वविषयो ह्यभिलाष इच्छा न क्षणिकेषु अनुभूतपूर्वताभिमान उपपद्यते ।

ननु तर्हि दृष्टेऽनुपपन्नं नाम दृष्टे ह्यनुपपत्तिर्नास्ति न पुनः दृष्टस्याप्यथाभावो दृष्टत्वान्नानुपपन्न इति शक्यते वक्तुम् । दृष्टश्चायमन्यथाभावः । तस्मादिच्छया कार्यकरणादन्यमुपलभामह इत्युक्तम् । तथा स्मृते स्मृतिरप्यनुभूतविषयैव । न क्षणिकेऽर्थेऽयमनुभूतानुभव उपपद्यते । न हि दृष्टेऽनुपपन्नमित्यनुपपन्नं । कथं तर्हि भाष्यकारेणोक्तं अनुपपन्नमिति नः क्व संप्रत्ययः श्रूयताम् यथोक्तं किमनुभवस्यानुपपन्नत्वं अनुभव एव यस्यानुभूयते का तस्यानुभूयमानापेक्षा तस्मात् सुष्ठूच्यते अनुपपन्नमिति न क्व संप्रत्यय इति । तस्माच्छून्या स्कन्धा इत्युपसंहृतं । तथा च ब्राह्मणमिममेवार्थमनुवदति विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति । न प्रेत्य संज्ञास्तीति । तस्मादनात्मन्यात्मबुद्धिहेतवोऽमी निराकरणीयतयोपन्यस्ता भगवता भाष्यकारेण ।

अत्रोच्यते नैतदेवम् । अन्येद्युर्दृष्टः परेद्युरहमिदमदर्शमिति । भवति प्रत्ययः । प्रत्यगात्मनि चैतद्भवति न परत्र । य एव ह्यसौ योऽन्येद्युर्दृष्टवान् तस्मात्तद्व्यतिरिक्तोऽन्योऽस्ति यत्रायमहंशब्दः किं पुनः कारणमत्रानुमाननिराकरणे असम्भवादिति ब्रूमः । प्रत्यक्षदृष्टोऽनुमानं न संभवतीति साहसमिदम् । स्वयमेव च वक्ष्यति नूनमभावनित्यान्नित्यं पश्यतीति । तस्मान्नात्रासम्भवाभिप्रायो वर्णयितुं शक्यते । अथैतन्मनसि वर्तते परोक्तमनुमानं न संभवतीति प्रत्यक्षोपन्यासस्तर्हि किमर्थः न ह्यसति प्रत्यक्षेऽनुमानमुपपद्यत इति चेत् किमिदमसति प्रत्यक्षे इति अस्ति चानुमानं प्रत्यक्षव्यापारनिरपेक्षं न ब्रूमो मालानुमानं प्रत्यक्षव्यापारनिरपेक्षमस्तीति । किं तर्हि स्वयमात्मानं प्रत्यक्षेणानुपलभ्य नेदमनुमानं प्रवर्तत इति । उपलब्धश्चेत् स्वयम् किमनुमानेन स्वपरिज्ञानशुद्धिर्हि श्रेयसे । तदर्थश्चायमारम्भः । अथायमुपदेशः परार्थ एव प्रवृत्त आत्मसंविद इदानीं क्व उपयोगः अथ परस्यापि प्रतिपत्तौ प्रत्यक्षमेव प्रमाणमिति मतं अनुमानोपन्यासो निरर्थकः

यदप्युच्यते यत्रायं अहंशब्द इति पुनश्चापह्नूयते न वयमितीमं शब्दं प्रयुज्यमानमस्मिन्नर्थे हेतुत्वेन व्यपदिशाम इति । तदप्यबुद्धिमत एवाभिधानं प्रतिभाति किमपह्नवनीयस्योपन्यासे प्रयोजनं इदमपरमयुक्तम् यदि विज्ञानादन्य... विज्ञाता विज्ञानमपास्य तन्निर्दिश्यतामिदं तदीदृशं चेति पृष्टे अत्रोच्यत इत्येवमाद्युत्तरं नोपपद्यते । अत्र विज्ञानाग्रहणे तद्ग्रहणं नास्तीति चोदितं स्वसंवेद्यतया कथमस्य निराकरणम् । न हि स्वसंवेद्यत्वनिबन्धनं विज्ञानग्रहणपूर्वकं ग्रहणं वस्तुनः ।

अथायमभिप्रायः स्वसंवित्रं न पृथक्तया व्यपदेष्टुं शक्यते परस्मा इत्यल्पमिदमुच्यते । अपृथक्तया कथं परेणासंविन्नोऽर्थो व्यपदेष्टुं सक्यते परस्मै । तस्मादिदमप्यनालोचनपूर्वमिव प्रतिभाति । प्रत्ययस्य चोपन्यासे किं प्रयोजनमिति नैव ज्ञायते । न चायमर्थः परित्यक्त एव विज्ञानग्रहणोपसंहारात् ।

अथायमभिप्रायः विज्ञानग्रहणपक्षेऽप्यात्मनः प्रत्यक्षत्वं न शक्यतेऽपह्नोतुमिति रूपान्तरं नोपलभामह इत्यनिकृतैवेयं युक्तिः । न च कश्चिद्विशेषोऽभिहितः । उपमानमपि नैयायिकोक्तमभिदधता स्वलक्षणाभिधानविरुद्धमुक्तम् । नचाहं गच्छामीति चोद्यस्यापि स्पष्टं किञ्चिदुत्तरमुपलभ्यते ब्रह्मविद्विरुद्धं त्वेतत् यदुताहंप्रत्ययमेयतात्मनः । मूर्धाभिषिक्तमिदमनात्मन्यात्मज्ञानमित्युदाहृतम् यदुताहंकृतिर्ममकारश्चेति । निर्मुक्ताहंकारममकारमात्मज्ञानमात्मविदो मन्यन्ते । तस्मादनात्मज्ञानविलसितमिदमहंप्रत्ययप्रमेय आत्मेति ।

अत्रोच्यते अन्येद्युर्दृष्टेरपरेद्युरहमिदमदर्शमिति भवति प्रत्ययः प्रत्यगात्मनि चैतद्भवति न परत्र किमिदमदर्शमिति यदि तावत् प्रत्यभिज्ञा क्षणिकत्वस्यैव तदुत्तरं न नैरात्म्यस्य । न चात्र क्षणिकत्वनिराकरणमभिप्रेतम् । किं तर्हि बुद्धीन्द्रियशरीरव्यतिरिक्तस्यात्मनः सद्भावप्रतिपत्तिः । न च क्षणिकतया नैरात्म्यमुक्तं परैः । किं तर्हि स्कन्धातिरिक्तानुपलब्धेः । नित्यताया । हि क्षणिकत्वं विरोधि नात्मसद्भावस्य । तस्य चात्र सद्भावः परैराक्षिप्तः प्रतिपाद्यते न पुनरात्मनोऽविद्यमानस्य नित्यताया भक्षेयं प्रति समाधिः । न चान्य उपलब्धा....द्य चान्य इत्येतावता नैरात्म्यं । तस्मात् अहंप्रत्ययग्राह्यः कार्यकरणव्यतिरिक्तोऽत्र नास्तीत्येतावद्वक्तव्यं ह्याद्येत्यतिरिच्यते । अथायं बुद्धिः क्षणिकत्वात् साधितेऽप्यस्तित्व अत्मतैव हीयत इति केयं वाचो-

युक्तिः स्कन्धानां स्कन्धता किमिति न हीयते भोक्तृत्वं ह्यात्मन स्वरूपं भोग्यता स्कन्धानां यथा च क्षणिकत्वेऽपि भोग्यता नापनेतुं शक्यते स्कान्धानां तथा भोक्तृत्वमप्यात्मनस्तदिदं क्षयप्रयाकणकं अनात्मज्ञो भवान् यस्यैवंविधानि चोद्यानि । चेत्सिद्धौ किमिति क्षणिकता स्कन्धानामुक्तेति किमिति चोक्ता भोक्तुरभावात् भोक्तुरभावे क्षणिकता स्कन्धानामिति किमियं राजाज्ञा नेयं राजाज्ञा नयाज्ञा ह्येषा । कथं भोक्तुः सद्भावे कार्यकरणं क्षणिकमिति नास्ति वः प्रमाणम् । तत्कस्मात् अनुमेयं कारणं कार्यतः । अतश्च क्रियासिद्धि-क्रियापलापनिबन्धनोऽयं क्षणिकत्ववादः । लुप्तक्रियस्य च कर्तृत्वभोक्तृ-त्वाक्षेपः । तदाक्षेपे चात्माक्षेपः । परिणतिस्वभावमात्रमिदं कार्यकारणमिति कल्पनेयं कर्त्री भोक्त्रेति च । तस्मादहंप्रत्ययालम्बनमात्रसिद्धौ सिद्धेऽपि बुद्धीन्द्रियशरीरव्यतिरेकिणि कर्तृत्वभोक्तृत्वे न स्तः । तदात्मता चात्मन आत्मता तस्मादविनाशितापुरस्सरैव भाक्तृतेति मन्वानः सप्रत्यभिज्ञं प्रत्यक्षमुपन्यस्तवान् भाष्यकारः । अत एव च नैरात्म्यवादिनो मुहुर्मुहुः क्षणिकतामकिञ्चित्करतां चापादयन्त्यात्मनिर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्सम इति । तस्माद्भोक्तृ-तैवात्मेति युक्तम् भोक्तृतैवात्मनि कर्तृत्वोपन्यासस्तु विरुध्यते निष्क्रियत्वादात्मनः सर्वगतत्वाच्च निष्क्रियत्वं प्रतिपन्नं च सर्वगतत्वं सर्वत्र सुखोपलम्भात् न ह्यसत्यागमने किंचिद्विरुद्धमिति चलनात्मिकां क्रियामङ्गीकृत्य निष्क्रियता न पुनर्भोगोत्पत्तावपि तस्मात् सुष्ठूच्यते कर्तृभोक्तृतैवात्मतेति । तस्मादुपपन्नोऽयं ग्रन्थोऽयमिदमदर्शमिति विषयप्रत्यभिज्ञा चैतन्निबन्धनेति शब्दाधिकरण उपन्यस्यते प्रत्यगात्मनि चैतद्भवतीति कस्यार्थस्य सिद्धये भोक्तृत्वस्येव कथं प्रत्यगात्मनि भागदर्शनात् । यदि परोऽप्यहंप्रत्ययस्य विषयतामापद्यते भोक्तृत्वज्ञानं प्राप्नोति भोक्तृता चात्मेत्युक्तम् न परत्वम् । परो ह्यसौ योऽन्येद्युर्दृष्टवानिति प्रत्यभिज्ञानुपपत्तिः यत्रायमहंशब्द इति अहंशब्दोपन्यासस्तर्हि किमर्थः परमपह्नवाय नापह्नवाय परप्रतिपत्तये किमिति तर्ह्यपह्नवः साक्षाद्धेतुत्वाङ्का-निराकरणाय साक्षाद्धेतुतां मन्वानेन नात्यन्वप्यहंशब्दोऽस्तीति प्रदर्शितम् । परत्राप्यहंशब्दो दृश्यत इत्येवमादिना । न वयमिति न साक्षाद्धेतुतयेद-मुपन्यस्तमिति प्रकटितम् । हेत्वर्थप्रदर्शनार्थस्तु शब्दप्रयोगः ।

ननु चाहं गच्छामीति न हेत्वर्थप्रदर्शनमात्रतया शक्यं परिहर्तुम् । अत्र ह्यहंप्रत्ययोऽपि व्यभिचार्येवोपलभ्यते अचलनात्मकत्वादात्मनः । तस्मात् स्कन्ध

एवालम्बन्यातामापद्यन्त इति आशङ्कनीयमिदं किमिति निराशङ्कैरेव गम्यते किमत्राशङ्कनीयम् इदंप्रत्ययग्राह्यं हि कार्यकरणं प्रत्ययान्तरग्राह्ये च वस्तुनि विरुद्धप्रत्ययान्तरालम्बनता नोपपद्यते गौर्वाहीक इति यथा गौण उपपद्यत इति चेत् परिहृतं त्वयैव । तस्मादसंभिन्नेदंप्रत्यय एवाहं प्रत्यय आत्मलंभनम् । ब्राह्मणमिममेवार्थमतिवदति अशीर्यो न हि शीर्यत इति अशीर्यतया भोक्तृत्व-मात्मनः विनश्वरं च विज्ञानमिति तद्व्यतिरिक्तालम्बनतामापादयति व्यामोहोऽय-महंकारग्रन्थिरिति न शक्यते वक्तुम् । यस्य च दुष्टं करणं यत्र च मिथ्येति भवति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य इति सिद्धत्वादस्यार्थस्य । यदि परं ब्रह्मविदामेष निश्चयः यदुपलभ्यते तदसद्यं नोपलभ्यते तत्तत्त्वमिति नमस्तेभ्यो विदुषि नोत्तरं वाच्यमित्यत्र परिहारः । तस्माद्यथार्थोऽयमर्थवादः स एष यज्ञायुधी यजमान इति । आह यदि विज्ञानादन्यन्नास्ति विज्ञानमपास्य तन्निर्दिश्यतामिदं तदीदृशं वेति किमिदं चोद्यते । इदमेव चोद्यते तदेव न ज्ञायते । कथं न ज्ञायते इत्थं न ज्ञायते किं वा सविज्ञानस्यात्मनोऽहंप्रत्ययः प्रमाणतयोप-न्यस्तः येनेदमुच्यते विज्ञानमपास्य तन्निदर्शयितव्यमिति अनेकवस्त्वालम्बनं हि यत्र ज्ञानं तत्रेदं युज्यते वक्तुम् इदमपास्येदं निदर्शयति इह त्वेकात्मरूपैव संवित् । तस्मादिदं व्युदसनीयमिति तमसि पदमत्रोच्यते ।

अयमस्याभिप्रायः ज्ञेयत्वे ह्यात्मनो ज्ञानज्ञातृणी न व्यतिरिक्ते शक्येते वक्तुम् । न चापास्यैव ते संविदस्तीति सिद्धम् । तस्मात् ज्ञानज्ञातृणी व्युदस्य पृथक् प्रमेयतया निदर्श्यतां अत्रोच्यते स्वयंवेद्यः स भवति नासावन्येन शक्यते द्रष्टुमिति किमिदमस्योत्तरमुपपद्यते किमिति नोपपद्यते एवं नोपपद्यते सैवेयं पूर्वोक्तैकालम्बनानैकाकारता प्रत्ययस्याभ्युपगता भवति । अविवेकापराधोऽयं नात्रायुष्मतः दोषः ।

ननु चाहंप्रत्यये योऽयमहमिदमदर्शमिति उपन्यस्तः नाहमहमदर्शमिति एवं च सति कथमनेकाकारता तस्मादविवेकः परमापदां पदम् । यदि ह्यात्मशब्दवाच्यतया ज्ञेयतोपन्यस्ता प्रमेयान्तरशून्यता वा ददेताचाद्यमभविष्यत् इह तु सर्वज्ञेयप्रमातृतयैव संविदुपन्यस्ता तस्मात् प्रतिपक्षोपन्यास एवायं कथं तैनेव बाध्यते न हि यद्यस्यैव बाध्यं तत्तस्यैव बाधकं भवितुमर्हति तस्मात्

सम्यगुत्तरम् । यथा कश्चिच्चक्षुष्मानित्यनेनापि निदर्शनेन कर्तृकरणान्तर-निषेध एव स्थिरीकृतः ।

ननु चात्र कर्त्रन्तरं करणान्तरं भिन्नं मेयात् किमिदं निदर्शनं कर्त्रन्तराभावसामान्यात् तस्मात् कारणदोषरहिताः विपरीता च संविदस्तित्वे हेतुः । भवतु कर्त्रन्तरं मा वा । उक्तं च यथा अवगम्यतेऽर्थस्तथा भवतीति न यथा नावगम्यत इति अत्रापि वाल्पणं भवति शान्तायां वाचि व्यापृतेऽन्यत्र कर्तृतया कथं कर्तृकरणान्तराभावे गृह्यत इति प्रश्नः । वाग्ग्रहणं च करणान्तरा-भावनिदर्शनार्थं आत्मज्योतिः सम्राडिति होवाचेति अयमर्थः पूर्वोत्तरपक्षभङ्ग्या प्रदर्शितः एवं चागृह्यो न गृह्यत इति ब्राह्मणमुपपन्नम् । ननु चात्रागृह्य-तैवोपन्यस्ता ननु न श्रुतं भवता आत्मज्यातिः सम्राडितीदमपि किं न श्रुतं द्वयोः श्रुत्योस्तदनुरोधेनास्याग्रहणश्रुतिरापेक्षिकी न पुनरात्मग्रहणमन्यथा व्याख्यायत इति का युक्तिः । स्वयंज्योतिर्ग्रहणे गुणत्वादस्यासम्भवात् अग्राह्यत्वे चापेक्षिकतयोपपत्तेः आत्मा ज्ञातव्यो मन्तव्य इति चाविरोधात् । एवं च स्वयंज्योतिष्ट्वमुपपद्यते इति ।

ननु चैवं सति कथं परस्मै प्रतिपादयितुं शक्यते परप्रत्ययार्थ-श्चायमारम्भः शास्त्रकाराणाम् । श्रुतीनां च स्वसंविदेवाभ्युपायतां प्रतिपद्यते य आत्मना संवेद्यते न परेणेति सर्वपुरुषेषु च परासंवेद्या संविदस्तीति सिद्धा परसंवित्प्रतिषेधमुखेन चोपदेशानामुपदेशता । तदिदं नेति नेत्युपन्यस्तम् ।

ननु सुखादयोऽपि स्वसंवेद्या एतेऽपि परेण नैव परस्थाः संवेद्यन्ते कथं तेभ्योऽन्यतया परस्मादुपदिष्ट आत्मा भवति तत्र भाष्यकारेण लिङ्गावगम्यतया परेणावगम्यन्त एवेत्युक्तं तदयुक्तमिव । आत्मनोऽपि प्रसङ्गात् । तत्रापि चेष्टानुमानं स्वयमुपन्यस्यति अतः प्रतिपन्नार्थोपघाति कथं विद्वद्भिर्लिख्यते तदिदमनुपपासितगुरोः श्रद्वम् चेष्टा हि कारणदोष-निराकरणतयोपन्यस्ता सुखादयस्तु भ्रूभङ्गनेत्रविलासादिगम्याः कः पुनरनयो-र्विशेषः अनेनापि परस्यैव संविद्गम्यते । अकार्यत इति विशेषः । कथं पुनरसम्बद्धमुपलक्षयति कथं वा अनुपलक्षितः पुरुषान्तराविपर्यय स्वात्मनि विपर्ययाशङ्का निरस्यति विपर्ययाग्रहणादिति ब्रूमः । न चाग्रहणे सम्बन्धि-

नोपयुज्यत इत्युक्तं तस्मादुपपन्नमिदं शाबरं वचः । उपमा यत्र कथनोपाय-तयैवोपन्यस्ता कथं पञ्चप्रमाणान्तरपूर्वकमिति न लक्षणव्यवहारयोर्विरोधः । यदुच्यते विज्ञानमयाम्य त निदर्श्यतामिति । ननु च दत्तोत्तरमेतत् स्वसंवेद्यः सं भवतीति दत्तोत्तरस्य च पुनरुपन्यासो नोपपद्यते ।

अथायमभिप्रायः । नैवेदमस्योत्तरम् । कस्य तर्हि तदुत्तरम् यदि न कस्यचिदुत्तरं किमेतावता तदुत्तरेण भवितव्यम् न तु तदनन्तराभिधानात् तदुत्तरमिति गम्यते पुनः प्रश्नाभिधानान्नोत्तरमित्यवैहि क्रमाल्लिङ्गं बलीयः । तदिदमाकाशभ्रान्तमुभयं तस्यैवोत्तरं स्वसंवेद्यः सं भवतीतीदमपि लिङ्गा-देवोत्तरमवसीयते । व्याख्यातं चास्य तदपाकरणसामर्थ्यं पुन प्रश्नस्तदानीं किमर्थः अस्ति किञ्चिदवलग्नम् । किं तदवलग्नम् सत्यमिदमहं वेद्मीमिति संवेद्यते नाकारान्तरकल्पना ज्ञानविविक्तस्य तु ग्रहणं न प्राप्नोति व्यापृताव-गमात् ज्ञानावगमे च रूपान्तरानुपलब्धेः पुनरपि शून्यता । तस्मात् कल्पित एवायमहंकारग्रन्थिरिति पुनरुपन्यासः । यद्युपायमेव निप्रतिषेधतीति किमभिप्रेतमुत्तरवादिनः इदमभिप्रेतं ग्राह्यानुकारिता हि ज्ञास्योक्ता न ग्राहकानुकारिता व्यापृतवस्थोपायतयैवोपन्यस्ता । कथमनुपायमुपेयं शक्यते कथयितुमिति । तदिदमाह । यद्युपायमेव प्रतिषेधति न शक्यत उपायन्तरेणोपे-तव्यमुपेतुं अयमेवाभ्युपायो ज्ञातव्यानामर्थानामिति तद्यथा कः शुक्लो नाम यत्र यत्र शुक्लत्वमस्तीत्यनेन किं समर्थितम् इदं समर्थितम् यथा न शुक्लतामन्तरेण ज्ञेयमवगम्यत इति ।

ननु चैवं शुक्लतापुरःसरैव ज्ञेये बुद्धिः एवं चानभिप्रेतोऽर्थः समर्थितो भवति नानभिप्रेतः । एतावदनेनोक्तम् नोपयमन्तरेणोपेयानामुपेय-त्वमिति यस्य यथैवापायत्वं तथैव तस्य ज्ञानस्य रूपायत्वेऽपि तत्पुरः-सरा न संविदित्युक्तम् । तस्मात् सर्वविज्ञानं ज्ञेयतात्मनः स्थिता भवति अहमिदमदर्शमिति । इयान् विशेषः अनुमानादिष्वपि प्रत्यक्षता विषयभेदाद्धि प्रमाणभेदो न प्रमातृभेदात् प्रमातृरूपता नु ज्ञानस्यानाशङ्कनीयैव अनाशङ्कितत्वाद्युक्तं चेदं नाशङ्कितं कर्मप्रवणत्वात् कर्मणः सकर्मकस्य यदपि ज्ञातृतैव ज्ञानादृतेन शक्यतेऽवगन्तुमिति तदधीनत्वात्तदवगते युक्तं न च रूपान्तरोपलब्धिरिति तदपि प्रत्युक्तम् । कामं विज्ञानमपह्नूयते

नार्थ इति तस्मात् सिद्धमात्मतत्त्वमिति । यत् पुनः ब्रह्मणं न प्रेत्य संज्ञास्तीति तत् पूर्वोत्तरभङ्ग्या स्वयमेव ब्रह्मणान्तरेण व्याख्यातं एवं चार्थवादतो पपन्नैवेति न चैष विधिशब्द इत्यपि प्रत्युक्तम् । न च स एष इत्युपपन्नार्थं यातीति कथमधिकृतकामसिद्धे सिद्धं यदुक्तमहंकारममकारावनात्मन्यात्माभिमाना-विति मृदितकषायाणामेवैतत् कथनीयं न कर्मसङ्गिनामित्युपरम्यते । आह च भगवान् द्वैपायनः ।

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्

इति रहस्याधिकारे । तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात् नाज्ञानादिति

कर्मके तत्र दर्शनात् ॥

उक्तं नित्यः शब्दार्थयोः सम्बन्ध इति तदनुपपन्नमिति केयमनुपपत्तिः इयमेवानुपपत्तिः अनित्ये शब्दे नित्यः शब्दार्थयोः सम्बन्धो नोपपद्यत इति कथं तर्हि समवायेऽयुतसिद्धयोरनुपपत्तिः शाब्दत्वं च निरस्तम् ।

ननु च गत्वाद्यन्यदनिरस्तमस्ति । नैतद्गम्यस्य विशेषस्यानुपलब्धेः । कथं तर्हि शुकशारिकामनुष्येषु । अत एव स्वतो विशेषो नोपलभ्यते शुकशारिका-मनुष्या एव हि तत्र विशेषतामापद्यन्ते तथा च लौकिकाः शुकोऽयं पठति मनुष्योऽयं पठति विशेषो नाभिदधति न पुनरमुं गविशेषममुं गविशेषमिति । तस्मान्न नित्यता सिध्यति सम्बन्धस्य । अतः शब्दस्य नित्यत्वं वक्तव्यम्; तदिदमाक्षेपपूर्वकमुच्यते कर्मैके तत्र दर्शनादिति ।

ननु चैवं सति कृतकोऽपि सम्बन्धो नोपपद्यते ततः किम् लौकिकव्यवहारोच्छेदः पुनस्ततः किम् अनित्यत्वप्रतिज्ञा नोपपद्यते लौकिक-व्यवहारविरोधात् बलान्नित्यता प्राप्नोति । लौकिकव्यवहारविरोधाददित्यनित्यता मा भूत् नित्यतापत्तेः किमायातम् इदमायातम् लौकिकव्यवहारानुपपत्तिरेव । सत्यमेवं यदि प्रत्यस्तमितं समयेन न ह्यविषयः समयोऽस्ति सर्वानुपपत्त्यार्ति-रोऽयं समयः । तस्मात् शब्दप्रमाणकानां व्यवहारमात्रेण प्रामाण्यं सिध्यति ।

तस्मान्नित्यत्वे यत्नः कर्तव्योऽभिधानस्य । स चायं प्रारब्धः वृद्धव्यवहारसिद्ध-त्वात् सम्बन्धज्ञानस्य सम्बन्धावगमपूर्वकत्वाच्चार्थावगतेः । न च क्षणिकत्वेऽपि चक्षुरादीनामिव प्रामाण्यसिद्धप्रथमश्रवणानवगमात् । कर्मैक्ये तत्र दर्शनादिति कृतकत्वमुच्यते । किमिदं कृतकत्वम् । पुरुषप्रयत्नेनोत्पत्तिः ।

नन्वप्रत्यक्षपूर्विकापि शब्दस्योत्पत्तिर्दृष्टा यथा चलाचलादेः । नायं दोषः अभिधानाधिकारात् । न चेदमभिधानमप्रत्ययपूर्वकं दृश्यते । अतः क्रियानन्तरोपलब्धेस्तयैवोत्पद्यत इति मन्यामहे । कथं तर्हि मूलोदकादिषु अन्यतोऽस्तित्वावगतेः शब्दे पुनः प्रयत्नानन्तरं चोपलब्धिः तस्मान्न विद्यमानस्य प्रयत्नोऽभिव्यञ्जकः इति शक्यते वक्तुम् ।

नन्विदमस्ति प्रयत्नात् पूर्वमस्तित्वे प्रमाणं किमिदमस्ति सप्रत्यभिज्ञं प्रत्यक्षं । कथमत्र प्रत्यभिज्ञानम् अन्यत्वानवगमात् । अनित्यवादिनो व्यक्तिमन्यत्वेनावगतिरस्ति किमिति नास्ति प्रस्तोत्पन्नयोः विशेषाग्रहणात् । किं विशेषाग्रहणनिबन्धनैव प्रत्यभिज्ञा किं वा मन्यते भवान् कर्मण्यपि प्रत्यभिज्ञा प्राप्नोति स्वरूपग्रहणे सतीदमुच्यते आनुमानिकं च कर्मेत्युक्तं का वार्ता बालादिनित्यत्वे बालादीनामनुमानविरोध इति चेत् तुल्यमभिधानेऽपि अस्थानादेः । तस्मात् विशेषाग्रणेऽप्यन्यता अन्यत्वे च सिद्धा प्रयत्नानन्तरोप-लब्धेः प्रयत्नात्पत्तिः ।

ननु च प्रयत्नोत्पन्नानामपि कालान्तरावस्थायितया न व्यवहारानुपपत्तिः उत्पन्नस्यापि चक्षुरादेः स्वाभाविकं रूपग्रहणसामर्थ्यं नैव विहन्यते । सत्यम् नैतच्छब्दे अस्थानात् ।

ननु चक्षुषोऽस्थानत्वेऽपि रूपग्रहणशक्तिर्नैव विहन्यते तद्वच्छब्देऽपीति चेत् प्रत्युक्तं प्रथमश्रवणानवगतेः । तस्मात् अस्थानादित्ययं हेतुरौत्पत्तिकत्व-विघाती सम्बन्धस्य यदि कालान्तरावस्थायिता स्यात् स्यादपि व्यवहाराच्छब्दा-वगतिः अस्थायित्वे पुनः समय एव शरणं भवितुमर्हतीत्युक्तं अस्थानादिति । लौकिकमप्यभिधानमिममेव न्यायमनुवर्तते । कात्र न्यायानुवृत्तिर्मुख्यार्थता करोतेः शब्दं कुरु । शब्दं मा कार्षीः शब्दकार्ययं माणवक इति नानादेशेषु

युगपच्छन्दमुपलभामहे । तदेकनित्यस्यानुपपन्नमिति केयमनुपपत्तिः युगपदेक-स्यानेकत्रोपलब्धिर्न दृष्टा । ततः किमिदं ततो भवति साधितमनित्यत्वम् ।

ननु च साधितमन्यत्वम् । सत्यं साधितमन्यत्वम् । हेतुप्रचयस्तु प्रदर्श्यते । को लाभः न खलु कश्चित् । हेतुप्रयेन किम् सत्यं यथा भवानाह किन्त्वयमेवार्थो राद्धान्तमाक्षिपति । तस्मात् तद्भ्रमप्रतिषेधार्थोऽयमारम्भः न ह्यनुपन्यस्तस्य भ्रान्तता शक्यते वक्तुम् । अप्रदर्शिते च भीतत्वे पुनरुक्तोयो भवतीति कस्यचिन्मन्दधियः । सर्वार्थं चेदं शास्त्रं मन्दविषेणापीति दर्शितं भाष्यकारेण । सति विशेषे नित्यस्य नानेकत्वमिति किमिदमसति विशेषे नित्यस्य नानेकत्वमिति असति विशेषे नानात्वं नास्तीति शक्यते वक्तुम् । नित्यस्यानित्यस्य वा नित्यग्रहणं न विद्मः । यद्यनित्यस्यासत्यपि विशेषे नानार्थता स्यात्युक्तं वक्तुं नित्यस्येति । तास्मद्वर्णनीयोऽयं ग्रन्थः । वर्ण्यते तर्हि गवादेरेकस्यानेकत्र युगपदुपलब्धिर्दृष्टा नित्यस्य सतस्तस्मात् सत्त्वान्तरे च यौगपद्यान्नित्यस्यानेनान्यथासिद्धिराशङ्किता । तस्येदमुत्तरम् असति विशेष इति किं वा गवादेर्विशेषो विद्यते तदपि ह्येकमविशिष्टं न ह्यन्यच्छाबलेयेऽन्यत् बाहुलेये ।

अथायमभिप्रायः असत्याश्रयविशेष इति । तत्राप्याश्रयस्यैवान्यत्वं । किमायातमाश्रयिणः तस्मान्नित्यस्याप्यनेकत्वयुगपदुपलब्धिर्दृष्टा अतो नान्यत्वे युगपद्दर्शनं हेतुः ।

अथेदं मतं नैव गवादेर्युगपद्दर्शनमनेकत्र भेदा एव हि तत्रानेकादेशतया परिच्छिद्यन्ते न गोत्वम् कथं तर्हि सर्वेषु गौगौरिति बुद्धिः अत एवानेकदेशत्वं गोत्वस्य नास्ति । अन्यथा हि इह गोत्वमिह गोत्वमिति स्यात् । कथं तर्हीह प्रत्ययात् समवायः । एकद्रव्यपदार्थाभिप्रायं तत् न व्यक्त्यभिप्रायम् । तस्माद्धेतुरन्यत्वे युगपद्दर्शनमसति विशेष इति च युक्तं विशेषग्रहणम् ।

ननु चानित्यस्याप्यसति विशेषे नैवान्यत्वम् । बाढमस्ति । क्षालादिषु कार्यत्वाच्चाविरोधः नित्यस्य त्वकार्यत्वादनेकत्वविरोध इति युक्तो हेतुः । प्रकृतिविकारभावयशब्दस्य शब्दस्य न चायं नित्यस्योपपद्यते । तस्मात् स्मृतिरपि पूर्वोक्तहेत्वनुगुणैव सादृश्यमप्युपलभामह इत्युपपन्नं कार्यत्वम् । कारणवृद्ध्यनु-

गमाच्च कार्यत्वं मन्यामहे कालादीनामिव तस्मादनुपलभ्यमानावयवस्याप्यवयव-
वृद्धिरनुमीयते द्राक्षैवात्र निदर्शनम् ।

समं तु तत्र दर्शनम् इति । किमिदं समदर्शनं कार्ये चाकार्ये च
तुल्यो हेतुरिति कथं तुल्यता सान्यासिकतया किमत्र सन्न्यस्तम् । यदि
सप्रत्यभिज्ञप्रत्यक्षयाह्यतां वक्ष्याम इति ।

ननूक्तं तत् परिहृतं च क्षालादिष्विवानुमनेन शक्यत एकतां
वक्तुमिति । सत्यम् । यदि भेदाग्रहणनिबन्धनैव प्रत्यभिज्ञोच्यते तदग्रहण-
निबन्धना सेति प्रतिपादयिष्यामः । तस्मादुपपन्नं समन्तु तत्र दर्शनमिति ।

सतः परमदर्शनं विषयानागमात् इति तद्वदनैकान्तिकमदर्शनमपी-
त्युक्तम् । नन्वेतन्नोपपद्यते नित्यस्यादर्शने को हेतुः यदि परं विषयानागमः
अस्ति तर्हि स एव दुर्भणः किमिति नित्यपक्षे ह्यभिव्यङ्ग्यत्वं शब्दस्य ।
एकश्चायं शब्द एकविषय आकाशदेशत्वात् ग्राहकं चास्याकाशमेव । केयं
विषयानवगतिः । तस्मात् दूरस्तस्यैवानुपलब्धिर्न्याय्या केन चोक्तं न न्याय्येति
तदग्रहणे तु सति सर्वस्यैवास्यान्याय्यता न्याय्या । अत एवोक्तं यदि शक्ष्याम इति ।

ननु तदग्रहणेऽपि नात्र वरुणादिकल्पनात्मानं लभते । किमिति
पूर्वक्लृप्तिविरोधात् किं क्लृप्तमाकाशमिन्द्रियं तच्चैकमतः संयोगविभागयोरभि-
व्यञ्जकत्वे सत्यपि सर्वशब्दानां सर्वैश्चोपलब्धिः प्राप्नोति । युक्तं तावत् सर्वग्रहणं
सर्वशब्दानां त्वयुक्तं कारणवदभिव्यञ्जकान्यत्वात् सर्वैश्चोपलब्धिः कार्यपक्षेऽपि
तुल्यैव । यश्चोभयदोषो न तमेकश्चोद्यो भवतीति परिहृतं कारकाभिव्यञ्जकयो-
र्विशेषाभिधानेन विना नैतच्चोद्यश्च अनित्यत्ववादिनः । अयमस्ति विशेषः अभि-
व्यक्तिशब्दस्य इन्द्रियस्य वा शब्दाभिव्यक्तौ तावदेकविषयत्वात् सर्वशब्दानां
घटादीनामिवैकविषयाणां नाभिव्यक्तिः क्रमेण शक्यते वक्तुम् अदृष्टत्वात्
प्रसिद्धानामभिव्यञ्जकानां प्रदीपादीनां कारकानां तु कार्यदर्शनात् शक्यमनुमानं
शक्तेः ।

नन्वभिव्यञ्जकानामप्यभिव्यक्तिदर्शनादेवानुमानं युक्तम् । शक्तेर्न
कार्यपक्षे प्रतिपक्षतया संभवति को वा विशेषः प्रसिद्धेषु कारणेषु दर्शनात्
अभिव्यञ्जकेषु वादर्शनात् दृष्टानुगुणं चानुमानं न दृष्टविरोधि ।

ननु नैकविषयत्वे विरोधः । विषयान्तरे तु विरोधकथा विरुद्धैव । सत्यम् । विषयान्तरतैव दुर्वचा श्रोत्रमाकाशमित्यभ्युपगमात् अभिन्नं चाकाशं सर्वशब्दाश्च श्रोत्रविषयाः तस्मादेकविषयत्वं विषयैक्याच्च विरोधः । किमिदं प्रलप्यते तदिदमापतितं कर्णे स्पृष्टः कटिं चालयतीति ; अभिव्यक्तेर्विषयो निरूप्यते न पुनः शब्दस्य अन्यश्चायं प्रदीपादिविषयाद्विषयः । तस्मात् प्रदीपादिविरोधाच्छब्देऽभिव्यञ्जकानुमानाविरोधो न शक्यते वक्तुमित्युक्तम् । तस्मात्तद्ग्रहणनिबन्धनमनुमानं दुर्निवारम् । अतोऽश्वदर्शनमिदानीमनैकान्तिकमित्युक्तम् ।

ननु च श्रोत्रविषयेयमभिव्यक्तिः न च शब्दविषयाभिव्यक्तं श्रोत्रं गृह्णातीत्येतावदभिव्यञ्जके शक्यमनुमानम् न पुनरिमं शब्दमिमं मेति संस्पर्शादभिव्यञ्जकानां अयमेव च राद्धान्तः । स चानुमानविरोधीत्युक्तं किमत्र तद्ग्रहणं करिष्यति । परमत्र तद्ग्रहणमेव भ्रमः । पुन प्रसिद्धानुमानबाधनं सत्यं प्रसिद्धानुमानबाधनमयुक्तं प्रसिद्धप्रत्यक्षबाधनमप्ययुक्तमेव सप्रत्यभिज्ञं च प्रत्यक्षमात्मनि सामान्यादिषु च स्थितमुभयोर्बाध्यत्वे सति कस्यचिदर्थस्य सिद्धे कस्य बाधनं अनुमानात् प्रत्यक्षं बलीय इति नैयायिकाः ।

ननु च प्रत्यक्षं भ्रमभाक् अनुमानेऽपि भ्रान्तिरविशिष्टा तद्ब्रूमोऽनुमाने भ्रान्तिनास्तीति किन्त्वत्र भेदाग्रहणात् तद्बुद्धिर्न तस्मिन्नपि भवति संभावितभ्रममिति प्रत्यक्षमेव दुर्बलं मन्यामहे । अनयैव प्रकटिताप्रकटितभ्रमकारणतयोक्तं न्यायविद्भिः भवति वै प्रत्यक्षादनुमानं बलीय इति । किं निर्ज्ञातकारणदोषतैवात्रोपन्यस्ता किं चात्र यद्युपन्यस्ता

ननु च विपर्ययाभावात् नैवास्तितयोपन्यसितुं शक्यते किं विपर्यय एव मिथ्यात्वे हेतुः कारणदोषोऽप्यसमीचीनहेतुतयोपन्यस्त एव । ननु च कारणदोषः प्रयत्नेनोपलभ्यमानतयोक्तः कार्यप्रयत्नो नाम योऽसावत्र नास्तीत्युच्यते अयमेवासौ प्रयत्नः । अन्यत्र विपर्ययात् कारणदोषं विज्ञाय तद्भावभावितया एतत्कृतो विपर्यय इति तमन्यत्र विजानाति । ज्ञाते च तस्मिन् सत्यपि विपर्यये भ्रान्तमित्यध्यवस्यन्ति । किमत्रैवंभूतमस्तीति । बाढमस्मि । भेदाग्रहणं भेदाग्रहणानिबन्धन एव शुक्त्यादिषु रजतभ्रमः । एवमत्रापि भेदाग्रहणनिबन्धन एव ज्वालादिष्विव तद्भ्रमः । तस्मात् सुष्ठूक्तं शब्द एव तद्ग्रहणं भ्रान्तिरिति ।

यस्य तावद्विपरीताकारमर्थे ज्ञानमुत्पद्यते कदाचिद्युक्तं वक्तुं तस्य विपर्ययाभावादयं भ्रम इति । यस्य पुनरग्रहणनिबन्धन एव विपर्ययः तस्य पुनः का शक्तिर्वक्तुम् । अनुमानविरोधे सति ज्वालादिवैषम्यम् ।

ननु चाग्रहणमपि पुनर्ग्रहणादवसीयते । न चात्र कस्यांचिदवस्थायां भेदस्य ग्रहणमस्ति । यौगन्धिकस्फटिकयोरिव ज्वालादिषु कथमनुमानादवगतिरिति चेत् तत्तुल्यमत्रापि तस्मात् शब्दविषयं सप्रत्यभिज्ञं प्रत्यक्षमाशापाशमात्रं मीमांसकानाम् ।

यदप्युक्तमन्यैस्तुल्येऽपि संस्कार्ये संस्कारभेदात् कर्मान्यत्वमुपलभ्यत इति यथा मण्डूकवसयाक्ताक्षा वंशानुरगानिव पश्यन्तीति तदिदमाकाशविजृम्भितं संस्कारो नाम भवति यः स्वकार्ये शक्तिमुपजनयति न चैतदिन्द्रियस्य कार्यं यदिदमयथार्थग्रहणनिबन्धनमेतदिति प्रतिपादितम् । तस्मादभेदेऽपि संस्कार्यस्य संस्कार्यान्यत्वेन कार्यवत्त्वं ज्ञापकेन विद्यते इत्यन्यत् किञ्चिदुपदर्शनीयखड्गदर्पणादिप्रत्ययान्यथाभिव्यज्यते मुखमिति ग्राह्येयमुपरागा दृष्टः ; युक्तश्चाभिव्यञ्जकस्यापि विषयापत्तेः । इह पुनः श्रोत्रमग्राह्यं संयोगविभगावपि अत इदमप्याकाशविजृम्भितमेव । तस्मात् शब्दो नित्य इति श्रद्धयैव प्रतिपत्तव्यं शब्दात्मकत्वद्वेदस्य वेदनिन्दा मा भूदिति पठितं च शास्त्रकारैः स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः इति । तस्मादनिदंप्रथमतैव वास्य शरणं न पुनः शब्दनित्यतापूर्वमनपेक्षत्वं शक्यते युक्तितो वक्तुं । कल्पन्तां रागादिविनिर्मुक्तमप्रतिहतज्ञानं करुणाविष्टचेतसं भगवन्तं कञ्चिन्मुनिवरं माषीयतां या सुचपुरोर्दर्शनं व्यवहारमात्रमेवेदं वेदत्रयाभिहितं पश्यामः प्राज्ञैर्लोकयात्रासिद्ध्यर्थं सुप्रतिबन्धमनुपाल्यमानमिति—इदमेव युक्तं मन्यामहे । न हि दृष्टे संभवत्यदृष्टकल्पना न्याय्या । दृष्टस्यायमर्थो यत् प्रज्ञैः....जव नुपजीव्यन्त इति । यथा च सिद्धमागमवादिनामपि हेतुदर्शनादप्रामाण्यं यूपहस्तिनो दानमाचरन्तीत्येवमदिना कर्तव्यो वा सप्रत्यभिज्ञस्य प्रत्यक्षस्य शब्दो विषय इति यत्नः कथं पुनरनुमानाद्धालादेरिवान्यत्वं शक्यते वक्तुम् ।

ननु चानुमानादित्युक्तम् । किं तदनुमानं अनभिव्यञ्जकवैषम्यम् । नन्वभिव्यञ्जकानामनेकविषया शक्तिर्दृष्टा । ननु चेदमभिव्यञ्जकविषयमनुमानं

कथमन्यविषयमनुमानमन्यविषयस्यावच्छिन्नो हेतुः । श्रोत्रस्य ह्यभिव्यञ्जकसंस्कारं निरुणद्धि । न पुनः शब्दस्यान्यत्वमुपगमयति ।

ननु चोक्तं न चेत् संयोगविभगाः श्रोत्रस्य शब्दग्रहणसमर्थं संस्कारमापादयन्ति शब्दस्योत्पादकाः प्राप्नुयुः उत्पत्तौ चान्यत्वमिति । कथमन्यत्र प्रतिषेधोऽन्यस्योत्पत्तिं न च गमयति अन्यथा व्यापारानुपपत्तेः । न चेत्संस्कारकाः संस्कुर्युः किमन्यदतः शब्दोत्पत्तेः किं यस्य संस्कारता नोपपद्यते तेनोत्पादकेन भवितव्यम् । न चेदुत्पादको निर्व्यापार एव स्यात् । अन्यार्थता च संयोगविभागयोरुपलब्धा । सत्यम् । यदर्थास्तत्र भवन्त्युत्पादकाः संस्कारका वा परप्रतिपत्त्यर्थता च सिद्धा तत्तयोर्यदिष्टं तत्परिकल्प्यतां विषयान्तरे पुनः सम्बन्धाभावात् किमास्पदं कल्पनायाः । तस्मानन्यत्वे हेतुतां संयोगविभागयोः कथमिति नैयायिका मन्यन्ते । न चेत् श्रोत्रे कार्यमस्ति शब्दे कारणं प्रतिपद्यामहे किं कार्यतस्तादर्थ्यं हि तदित्युच्यते । सिद्धं तर्हि कार्यं श्रोत्रे न संप्रयोगविभागः शब्दार्था इति मन्यन्ते शब्दविदः ।

ननु कार्यदर्शनादयुक्तं वक्तुं शब्दविदां कार्यदर्शनमेव नास्तीति ब्रुवते शब्दे तद्ग्रहणात् । किं तर्हि कुर्वन्ति संयोगविभगाः श्रोत्रसंस्कारमिति ब्रूमः ।

ननु चान्यैः संस्कारैः वैलक्षण्यमत्र नोपपद्यत इत्युक्तम् । अनुमानात् कार्याभावं मन्वते तावान वयं तु प्रत्यक्षादुत्पत्तिं नेच्छामः अप्रत्यक्षानुमानयोः प्रत्यक्षं बलीय इति सिद्धम् ।

ननु चाग्रहणं भ्रमहेतुरित्युक्तं ज्वालादीनामिव इह चागुणमेवासिद्धम् तत्र कथं कार्यानुमानता । इह पुनस्तदवाप्यापि न सिध्यति न चासिद्धं सिद्धौ पर्याप्तं प्रत्यक्षं चानपेक्षत्वात् सिद्धमनुमाने वा कापेक्षा सिद्धोऽनुमानकार्यं कार्ये च सत्यनुमानमिति न पुनरेवं तद्ग्रहणापेक्षं प्रत्यक्षादेव हि तद्ग्रहणम् ।

किञ्च संयोगविभागौ च श्रोत्रार्थतयान्यतः सिद्धौ । कुतोऽन्यतः उक्तं दर्शनस्य पारार्थत्वादिति लोकतस्मात् तादर्थ्ये सति यथा संभवति तथा कार्यं कल्पनीयं न कार्यतस्तात्पर्यमन्यतोऽवगमादित्युक्तं तस्मान्नात्र ज्वालादीनामिव

प्रमाणमस्ति । तस्मात् सतः परमदर्शनमिति उक्तमनैकान्तिकत्वम् । कथं तर्ह्येकविषयैवाभिव्यक्तिः शक्यते वक्तुम् । कार्यदर्शनात् युक्त अदृष्टस्य कल्पनातो दृष्टस्य तद्ग्रहणस्य नापह्नवो न्याय्यः । कार्यान्तरदर्शनात्तु कारणान्तरकल्पना न्याय्यैव उपरतयोः संयोगविभागयोरिति । कौ तौ संयोगविभागावभिप्रेतौ ताल्वादीनामिति ब्रूमः । कुत एतदुपरतियोरिति श्रवणात् वायवीयानामुत्पत्ति-रुपरतिश्चानुमेया ।

ननूपरमन्तीति कोऽभिप्रायः वायवीयान् मनसि कृत्वा कार्यसमधि-गम्यत्वादिदमुत्तरं न हि ते प्रत्यक्षा इति स्पष्टीकृतम् । यद्येवमिदानीमुत्तरग्रन्थे नोपपद्यते आकाशविषयत्वात्तस्यैकत्वाच्च आकाशस्येति कथं नोपपद्यते वायवीयानामभिव्यञ्जकत्वे कार्यपक्ष इव यत्र ते तत्रैवोपलब्ध्या भवितव्यमित्येवं नोपपद्यते ।

अथायमभिप्रायः अभिव्यक्तिपक्षे नैव वाय्वाश्रिताः शब्दा भवन्ति । किं तर्हि आकाशस्था एवमेषां पुनः क्रियते तेषां वायवीयाः संयोगविभागा असमवायिकारणतां प्रतिपद्यन्ते तदेव समवायिकारणं भवति यत्रैव कारणं तत्रैव कार्योपलब्धिरिति युक्तमेवमभिज्ञाते वायवीयसंयोगविभागयोरभिव्यक्ति-कारणत्वे यत्रैवाभिव्यञ्जकं तत्रैवाभिव्यक्तिः यथा यत्रैव करणं तत्रैव कार्यं ।

अथैतन्मन्यसे कार्य एतद्युक्तं नाभिव्यक्ताविति तदयुक्तम् । अभि-व्यक्तिरपि कार्यमेवाभिव्यङ्ग्यं तु पूर्वोत्पन्नमतो यद्देशाभिव्यक्तिस्तत्रैवोपलब्धिरिति तुल्यमुभयोरपि पक्षयोः । तस्माद्व्याख्येयोऽयं ग्रन्थः । अविशेषज्ञो देवानां-प्रियः । कार्यं हि कारणदेशं भवति । अकार्यं पुनर्न परापेक्षदेशम् । तस्मादभिव्यक्तिर्भवति अभिव्यञ्जकदेशावभिव्यङ्ग्यं तु किन्तद्देशमतज्जन्यत्वा-दभिव्यङ्ग्यस्य । तद्देशाभिव्यङ्ग्यत्वाभिमतशब्ददेशस्य चैकत्वादाकाशस्य सर्वैर्ग्रहणं प्राप्नोतीत्यज्ञातेष्वपि वायवीयसंयोगविभागेषु सर्वः श्रोत्रेष्वेकमाकर्श यतः सत्यम् यथा भवानाह । यदि शब्दस्याभिव्यञ्जकाः संयोगविभागाः स्युः श्रोत्रस्य त्वभिव्यञ्जकाः श्रोत्रस्य च श्रोत्रदेशतैव ।

ननु चाकाशमेव श्रोत्रं तच्चान्यत्रपीति तुल्यं शब्दाभिव्यक्त्या । उच्यते । सत्यं सर्वत्राकाशमेकं किन्तु तस्य श्रोत्रभावः श्रोत्रदेश एव

कर्तृभिः सम्बन्धेन करणत्वात् कर्तुर्भोगायतनवशेन शरीरदेश एव कर्तृत्वानति तुल्यता । तस्मादुत्पत्ताविवाभिव्यक्तावपि न सर्वैरुपलब्धिः । नैतदेवम् अप्राप्ताश्चेपदुपकुर्वन्ति सन्निकृष्टविप्रकृष्टस्थितौ युगपच्छब्दमुपलभेयातामिति मननश्रोत्रसंस्कारपक्षे दूरस्थितं श्रोत्रं न संस्क्रियत तं न सस्तूयत इति वदता प्राप्तैरेव संस्कार इत्युक्तं असत्यां प्राप्तौ दूरसन्निकृष्टेष्वपदेशो न घटते । किमिदप्राप्ताश्चेदुपकुर्वन्तीति अप्राप्ताशङ्कैव नास्ति दूरे सत्या इत्यभिधानात् । तस्मान्न विद्मः कथमिदं भाष्यमायातमेवमिदमायातं श्रोत्रसंस्कारपक्षे सर्वगतत्वाच्छब्दस्य यावत्कार्यगम्यः संस्कारः तावति युगपद्ग्रहणं प्राप्नोति कोऽभिप्रायः ।

ननु च वायवीयाः संयागविभागाः नैव प्राप्य श्रोतुं संस्कर्तुं क्षमाः । न हि संयोगविभागैः संयोगन्तरमारभ्यत इति शक्यते वक्तुम् उभयप्रसङ्गान्न ह्येकस्मिन् कार्ये कारणद्वयकल्पना घटते । कार्यं हि कारणमवगमयति न पुनः कार्यान्तरमपि । तस्मादुत्पत्तिपक्ष एवैतदुपपद्यते यावद्वेगं संयोगविभागाः कार्यमारभन्ते न पुनरभिव्यक्तिपक्षे ।

ननु कार्यपक्षेऽपि कार्यान्तराकल्पना नैव घटते सत्यं न घटते । कार्यान्तरोपलब्धिः प्रत्यक्षैव दूरस्थसमीपस्थैः क्रमेणोपब्धेः । नन्वभिव्यक्तावपि तुल्यं न तुल्यम् । न ह्यभिव्यक्तिरभिव्यक्त्यन्तरमारभते कार्यस्य तु कार्यारम्भे न कश्चिद्विरोध नावेति ह्यापेक्षिकं कार्यं कारणं च । न पुनरभिव्यक्तिरभिव्यञ्जिका चेति तस्मात् दूरस्थसमीपस्थैर्युगपदेव शब्दग्रहणं यावति ग्रहणं तस्मात् युक्तोऽयमाक्षेपः । उद्द्योतस्योद्द्योतन्तरापेक्षेति बालिशभाषितमेतत् । तस्माद्वायवीयाः संयोगविभागाः शब्दमारभन्ताम् । आह्वक्यो वा भवतु राद्धान्तः संयोगाद्विभागाच्छब्दानिष्पत्तिः किमत्रानुक्तस्य प्रदर्शनम् अत्रापि श्रवणभावो विद्यत इति कोऽयमभिमानः । कस्यचिदज्ञस्य नायं राद्धान्तो भगवतो भाष्यकारेणोपन्यस्तो निरस्तश्चेति भवति मतिः तदुपनोदनायेदमुपन्यस्तं वायुशब्दोपन्यासेनैवायमुपन्यस्तो निरस्तश्चेति तुल्यकारणत्वादुपन्यासस्य निराकरणस्य च । तस्मादभिव्यक्तिकार्ययोरन्यथात्वप्रदर्शनार्थोऽयं ग्रन्थः अप्राप्ताश्चेदुपकुर्वन्तीति नैतदेवमभिघातेन प्रेरिता वायवः स्तिमितानि वाभ्यन्तराणि प्रतिबोधमानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तो यावद्वेगमभिप्रतिलंभ इति ।

ननु तदेवेदमुन्मादकत्वमुक्तं प्रतिज्ञातं चाभिव्यञ्जकत्वं संयोगविभागानिति तस्मादसम्बद्धमेवेदं प्रतिभाति । किमिति भोः उक्तमितीति । अनभिव्यक्तिज्ञो भावन् । कात्रानभिव्यक्तिज्ञता । अभिव्यक्तिर्हि तिरस्कारापनयः केन चोक्तेनेति स एवापनयोऽपनयान्तरं नारभत इत्युक्तं सकृद्व्यापरा ह्यपनये भवन्त्यपनेतारो न यावदपनेयं आदित्यप्रभादय इव सत्यं यद्येक प्रवापनेकल्प्ये तस्माकदयं दोषः । अत्र पुनर्वचोऽभिव्यञ्जकाः । कथमिदं ज्ञायते भवतो वा कार्यपक्षे कारणबहुत्वं कथं कार्यबहुत्वादिति चेत् समाध्यभिव्यक्तिबहुत्वात् कथं पुनरभिव्यक्ति-बहुत्वं यथैव कार्यबहुत्वं एकत्वे पुनर्वक्ष्यामः प्रत्यक्षस्य बलीयस्त्वादित्युक्तम् । एकत्वे च नित्यता नित्यत्वेऽभिव्यक्तिबहुत्वमेव न कार्यबहुत्वमिति स्थितिः ॥

## प्रयोगस्यपरम्

प्रयोगस्येति स्थिते एकस्मिन् न्याये गोमयादिवत् प्रयोगसिद्धिः प्रमाणान्तरप्रमितविषयता लौकिकस्य वाक्यस्य यथो एतदेकस्य सतः इत्यनेकधाभ्रान्तिमापादयति कथं पुनः विपर्ययाहृते भ्रान्तिरिति शक्यते वक्तुम् कारणदोषदर्शनात् । कस्य कारणस्यादृष्टतावगम्यते विषयस्य तावच्छ्रोत्रं यथापत्तेः नैव दुष्टता । श्रोत्रस्याप्यभिव्यक्तत्वात् नैव । अथ तु दुष्टं श्रोत्रमिति कल्प्यते एवं हि शब्दस्यैव ग्रहणं न प्राप्नोति । न च शब्दादृतेऽन्यच्छ्रोत्रस्य ग्राह्यमस्ति । यद्येवं कार्यपक्षेऽपि कथमनेकत्वग्रहणम् । श्रोत्रं नैव हि श्रोत्रं मानसं हि तत् । मनसा वा किं श्रोत्रेणागृहीतमेव बाह्यं वस्तु गृह्यते ।

किं वात्र शब्दव्यतिरिक्तं बाह्यं वस्त्वभिप्रेतं भवति । यदिदं शब्दनानात्वं किं शब्द एव उत शब्दादन्यः शब्दधर्मः अस्यैव धर्मस्तावदयं न भवति । रूपादिष्वपि दर्शनात् । रूपाद्यपि हि नानेनि गम्यते । नाप्ययं शब्द एव नानात्वं शब्दस्येति व्यतिरेकदर्शनात् । तस्मान्न विद्मः कस्येन्द्रियस्य व्यापारो यस्य दुष्टता कल्प्येत । किं तर्हीदं नानात्वमग्राह्यमेव दृश्यते तु सर्वार्थेषु बुद्धिरूपता चाग्राह्यत्वाद्बुद्धेः प्रत्युक्ता । उच्यते । यद्यस्य ग्राह्यं गृहीते च तस्मिन् ग्राह्यान्तरावमर्शो नानात्वम् । एवं तर्हि श्रोत्रस्यैव शता दुष्टे च शब्दग्रहणं न प्राप्नोति । असति च शब्दग्रहणे शब्दान्तरावमर्शः कुतः । तस्मादशेषदुष्टता कल्पनीया पुनः शब्दग्रहणे मनसस्तर्हि दुष्टत्वम् ।

ननु च मनसोऽपि दुष्टत्वं नैव शक्यते वक्तुम् । श्रोत्रग्रहणे यथार्थ-ग्रहणात् । न ह्यगृहीतसम्यगर्थस्य तदर्थावमर्शो घटते । तस्मादेवैनां भ्रान्तिं कल्पयिष्यति अविपर्ययात् दुष्टकारणतानवधृतेश्च । अभ्रान्ते च भ्रान्त्यभिधानं भ्रमादपि पापीयः । तस्माद्भ्रमकारणमत्र वक्तव्यं भ्रान्तिज्ञैरिदमभिधीयते उक्तं भवतैव नागृहीतबाह्येन्द्रियेण मनसा गृह्यते इतीन्द्रियेण च तद्ग्राहणादानकत्वं नास्तीति प्रत्यक्षेणावसितं मनसाप्यनेकत्वग्रहणं नैवोपपद्यते किमालम्बनमस्याः किञ्चेन्द्रियमनेकत्वावगतेः इदमिन्द्रियमिदं चालम्बनं नानादेशस्था हि ध्वनयो युगपदागच्छन्त इतरेतरनियपेक्षा युगपत् संस्कारानारभन्ते श्रोत्रस्य तत्संस्कारा-नुरोधात् एकमपि अनेकमिव गृह्णाति । एकैकसंस्कारोपजननाच्छक्ते नयनशक्ति-रिवाङ्गुलिविभिन्ना एकं भिन्नमिव गृह्णाति । तस्माच्छक्तिभेदाग्रहणनिबन्धनोऽयं भ्रमः । अनेन सान्तरालग्रहणं प्रत्युक्तम् । कथं पुनरनेन सान्तरालग्रहणं प्रत्युच्यते युक्तं तावत् संस्कारभेदात् शक्ताद्बोधः । तदनुरोधिनीभिन्ना च शक्तिरेकमपि विषयभेदेन समर्पयति । स्वभेदाग्रहणादनेकग्रहणं भ्रममुत्पाद-यति । आन्तरालग्रहणे को हेतुः तस्मात् कारणान्तरं बुद्धिरुच्यते । इदमेव कारणम् । नानादेशस्था ध्वनयो भेदेन संस्कारमारभमाणा आमूलं शक्तेरुद्बोधं जनयन्ति । अतः श्रोत्राकाशस्थितोऽपि शब्दोऽनुग्रहानुरोधात् तद्देशस्थित इति वक्ष्यते । ननु चान्त्यसंयोगविभागः संस्करोति किमियं मन्दता भवतः । अननुगृहीतपूर्वसंयोगविभागोऽन्त्यः संस्करोतीति नोपपद्यते । तदनुग्रहादुत्पत्तिरिव कार्यमत एव पूर्ववेगानुवर्त्युपरमः संस्काराणां तस्मादात्मो-दयानुरूपमुपजनयन्तस्तथा तथा तमवगमयन्ति कामं दशा एव भिन्नाः स्युरिति किमर्थोऽयमुपन्यासः प्राप्नोति यदि श्रवणेन्द्रियं संयोगदेश-मागच्छेत् तेन च तदस्ति भाष्य एव प्रत्युक्तत्वात् सूत्रान्तरगणेऽपि तावत् भेदो न प्राप्नोतीत्यभिप्रायः ।

ननु एकस्यनेकत्रोपलब्धिः । मूर्खप्रलपितमेतत् । एकस्यानेकत्रोपलब्धिः परिचोदिता परिहृता नैव शब्दान्तरमविकारं विकारः नैवेहैको यणाचेति प्रकृतिविकार भाव उपदिश्यते न हि लोके यकारं प्रयुयुक्षमाणा इकारमुपाददते । लोकसिद्धस्य चादेशा भवन्ति । तस्मादयमर्थ आदेशिकः । अचि परत इकारस्य स्थाने यकारः सादृश्यं तु प्रकृतिविकारभावे नैकान्तिकं दधिपिटककुण्डपिटकयोरदर्शनात् इत्युक्तं अतः सिद्धं शब्दान्तरत्वं नादवृद्धिः परा तुल्यं भेदपरिहारेण यथैव

हि तत्र भिन्ना भिन्नामिवावगमयन्ति एवमत्रापि प्रचिता प्रचितमिव विभागस्था विभक्तमिव सतो महानिवावयववानिव....च भ्रान्तिरुपपद्यते । संस्कारानुरोधी च शक्तेरुद्बोध इत्युक्तं तस्मादयमपि संस्कारभेदाग्रहणनिबन्धन एव भ्रमः । अतः स्थिते संप्रत्यधिकप्रत्यक्षे पूर्वोक्तमनेकान्तिकीकृतमनित्यत्वे हेतुजालमिदानींसप्रत्यभिज्ञप्रत्यक्षस्य शब्दविषयतोच्यते । नित्ययुक्तस्य स्याद्दर्शनस्य परार्थत्वाद्दर्शनस्य परार्थत्वादिति कस्यायं हेतुः नित्यतायाः शब्दस्य ।

ननु चायमपक्षधर्मः । अपक्षधर्मस्य च हेतुत्वं नास्तीति नैयायिकास्तुतशाखा हि ते दर्शनमेव परार्थतयोपन्यस्यते तत्र निर्विषयं नास्तीति शब्दोऽत्र विषयतयोपन्यस्यते । ततः किमिदं ततः परार्थदर्शनसबन्धिता हेतुः । एतदुक्तं भवति परार्थदर्शनं यस्य तस्य किं नित्यता कस्य यथा सवीस्याति ब्रूमो धूमादेः ।

ननु च स्वप्रतिपत्त्यर्थमपि दर्शनं धूमादेर्भवतु । परप्रतिपत्त्यर्थतापि । अनिराकरणीयं चैतत् अविरोधात् शब्देऽपि विद्यमानत्वात् । कालान्तरावस्थायित्वं च नित्यशब्देनोच्यते न सदकारणत्वम् ।

ननु च साकारणत्वं च पदमिष्यते । पाठमिष्यते स तु परार्थमात्रतयेव दर्शनस्य सिध्यति । किमिति तर्हि विशेष उच्यते । कथं नामानित्यस्यापि धूमादेर्दृष्टान्तता स्यात् । ननु चास्यापि नित्यता प्राप्नोति । विधेर्दर्शनात् । अत एव कालान्तरावस्थायित्वं साध्यतयोच्यते । कालान्तरावस्थायितया च सिद्धं शब्दस्य सदकारणत्वं दर्शनमेव तस्य कारणतया शङ्कितं परैः । तच्च परार्थतया कारणतां गतं तस्मात् परार्थदर्शनसम्बन्धितामात्रस्य हेतुत्वं शब्दस्य सदकणत्वारणत्वं सिद्धम् ।

ननु च तत्तुल्योपादानमते उपादानं सिध्यति पारार्थ्यदर्शनस्य । सत्यं सिध्यति । किन्तु न संभूतत्वे प्रमाणमस्ति । न कस्यचिदस्य संसारजन्तोः पूर्वोक्तसदृशमुच्चारयामि तत्सदृशो वायमिति विज्ञानोत्पादो दृष्टः । अत एव चाविपरीतं प्रतिपद्यते । अन्यथा मालाशब्दप्रत्ययस्यैव शालाशब्दसंवेदनाद्विपर्ययः स्यात् ।

ननु च सादृश्येऽपि विपर्ययो दृश्यते । यथा गोगावीशब्दयोः । तदेकत्वग्राहिणां तन्न दृश्यते न सादृश्यग्राहिणां तत्त्वविदां त्वनुत्पत्तिरेव । किमिदं तत्त्वविदामिति गोशब्दस्य गाव्यादयोऽपभ्रंशाः इत्येवंविदः तत्त्वविदः । तेषां गाव्यादिभ्योऽप्यर्थज्ञानमुत्पद्यते गोशब्दादेव प्रतिपद्यन्ते इत्युक्तं व्याख्यातृभिः । न च अनामद्रितया संसारस्यादिशब्दता कस्यचित्कल्पयितुं शक्यते यत्सदृशोपादानात् व्यवहारसिद्धिः । तस्मात् शब्दविषयसप्रत्यभिज्ञाप्रत्यक्षमूलोऽयं व्यवहार इति स्थितम् । अन्यदेव च साधितं अन्यत्रोपसंहृतं कालान्तरावास्थायिता साधिता । सप्रत्यभिज्ञप्रत्यक्षमुपसंहृतमन्यदेवास्तमन्यच्चोपनिपतितम् । तदेवेदं प्रत्यभिज्ञानादेव हि कालान्तरावस्थायिता सिध्यति । कालान्तरावस्थितिश्च प्रत्यभिज्ञप्रत्यक्षगम्येत्युक्तम् । यदि प्रत्यभिज्ञयैव कालान्तरावस्थायित्वं साध्यते किमिति तर्हि परार्थदर्शनसम्बन्धिता हेतुरित्युक्तं यत एव प्रत्यभिज्ञयैव कालान्तरावस्थायिता अत एव परार्थदर्शनसम्बन्धिता हेतुरित्युक्तम् । प्रत्यक्षैव भिन्नार्थदर्शनमित्युच्यते न पुनरन्यत् । स्वरूपस्यादर्शनेऽन्तरसिद्धत्वात् तत्पूर्वकत्वाच्च प्रत्यभिज्ञायाः न च स्वार्थपरार्थतामेको यतः प्रतिपत्तुं क्षमः । सर्वत्र यौगपद्यादिति । अनेन ज्ञेयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वं दर्शयति शब्दस्य हि किमर्थो यद्येवं कालान्त्यावस्थायिता सिध्यति न हि कालान्तरानवस्थायिनोऽन्वयव्यतिरकश्च निश्चयः । अतः कालान्तरावस्थायिता सिद्ध्यति कालान्तरावस्थितिश्च सप्रत्यभिज्ञप्रत्यक्षसमधिगम्येत्युक्तम् । कथं पुनरन्वयव्यतिरेकसमधिगम्यमर्थावगतिहेतुत्वमाकृतेः पदार्थत्वात् न चैकप्रयोगावम्याकृतेः पदार्थता स्वातन्त्र्येणाग्रहणाग्रहणात् द्रव्याश्रितानागृमहीतानां च पृथङ्निर्देशाद्योग्यत्वात् तस्मात् व्यवहारसमधिगम्यैवाकृतिपदार्थता न निर्देशसमधिगम्याद्व्यवहारश्चान्वयव्यतिरेकसमधिगम्य इति सिद्धा प्रत्यभिज्ञा । संख्याभावात्तदेवेदं सप्रत्यभिज्ञप्रत्यक्षं पुनरुपन्यस्यते हेतुप्रचयदर्शनार्थं हेतुप्रचये पुनः कार्योऽभ्यधिकः सिध्यति हेत्वन्तरनिरपेक्षत्वाद्धेतूनां स्वार्थसिद्धौ न खलु कश्चिदनर्थकस्तर्हि प्रचयोपन्यासः न चानर्थकः प्रचये सति दार्ढ्यमाकार्यधियामभिभवति तदर्थश्चायं प्रयासो न कृतधियां तस्मादस्ति प्रयोजनं कथमसौ प्रत्यभिज्ञाया हेतुः एकस्यावृत्तौ दर्शनात् । सत्यामकस्य स तु क्रियायाः क्रिययाभ्यावृत्तिगणन इत्यादेशात् न च शब्दः क्रिया किं तर्हि द्रव्य गुणो वा स्यात् । तदिदमन्यदीयमन्यस्योच्यमानं मातुलधनकथनन्यायमावहति ।

अत्रोच्यते वस्तुस्वभावानभिज्ञो भवान् । कात्रानभिज्ञता । वस्तुस्वभावापेक्षिणो ह्यादेशा भवन्ति अनुमानगम्या न क्रिया । ततः किम् न चानुमानगम्यस्य स्वरूपं लभ्यत इत्युक्तम् । अनुपलब्धस्वलक्षणस्यावृत्तिः केनावगन्तुं शक्यते ।

ननु च येनैवास्ति कार्यतः आवृत्तिरपि ततो भवति मैवम् । ज्ञाता वा कार्यावृत्तावावृत्तिः शक्यते वक्तुं न कार्यतः कार्यस्य तु कार्यतयावृत्तिर्दुर्लभा । कार्यान्तरतैव तत्र स्यात् । ज्ञाप्ये पुनरिदं संभवति ज्ञाप्यश्च शब्द उच्चारणस्येत्युक्तम् । तस्मात् पुनः पुनः ज्ञाप्यमानता शब्दस्य गम्यते नोत्पद्यमानता । अतो भङ्गित्वे कर्मणः कार्यैक्यादावृत्तिरित्युच्यते न स्वतः कार्यस्वाभाव्यात् । कृतस्य करणं नास्तीति कृतिनः । तस्मादविषय एवायं कृत्वसुचः । कार्यैक्यं च प्रत्यभिज्ञानादित्युक्तम् । कृत्वसुजर्थस्य हेतुतोपन्यास॰तद्ग्रहणान्यत्वेऽपि सति सादृश्येन व्यामूढं स इति वक्ष्यन्तीति किमिदमुपन्यस्तम् किमनेन निराकृतं प्रत्यभिज्ञाया इति न विद्मः । इदमनेन निराक्रियते भेदाग्रणनिबन्धनेयं सति बुद्धिर्भेदस्य वाग्रहणमतिसादृश्यात् सादृश्याद्यविवेकानां जात्यादीनां दृष्टम् । अग्रहणे च भेदस्य नान्यत्वं व्यपदेष्टुं शक्यते । अन्यत्वाव्यपदेशे च किमन्यदवशिष्यते स एवेति व्यपदेशात् । विवेकाय ग्रहणमेवात्रापराध्यते । मणिमुक्तादिष्विव विवेकशून्यानां तस्माद्विवेके यत्र आश्रीयतां अविवेकः परमापदां पदम् । आपत्सु जायतोद्वेगानां विवेक एवैकं शरणं परं सत्यमाह भवान् किन्तु अत्र विवेकाग्रहणे ज्वालादीनामिव हेतुर्नास्तीत्यस्थानादित्यस्मिन् सूत्रे लिखितं विस्तरेण ।

स्यादेतत् । बुद्धिकर्मणी अपि हि ते प्रत्यभिज्ञायेते ते अपि नित्ये प्राप्नुत इति । किमिदं कूष्माण्डपतनम् । उत्तरेणापि कूष्माण्डतैव प्रदर्शिता अत्र प्रत्यभिज्ञे नित्ये एवेति प्रत्यभिज्ञा कालान्तरवस्थायित्वात् हेतुरुक्ता । यदि कर्मणोऽपि शास्त्रिकोऽयमुपालम्भः ।

अथायमभिप्रायः अभ्युपगमहानं प्राप्नोतीति सत्यमनित्यत्वमभ्युपगतमस्माभिः आनुमानिकत्वमपि । न चानुमानिकेऽर्थे प्रत्यभिज्ञा भवति स्वरूपग्रहणहेत्वभावादसम्बन्धोऽयमुपालम्भः । यद्यस्मादभ्युपगमज्ञानमस्ति सर्वाकारमस्तु ।

किमिदमर्धजरतीयम् । उच्यते । यद्येकार्यत्वात् कर्त्रभ्यासं कृत्वसुजाचष्टे । कारणान्यतापि न सिध्यति । न ह्यन्यत्वावगतावभ्यासावगतिः । गम्यमानैकत्वाच्च तद्बाहुरपि नानात्वमनवगम्यमेव । तदिदमुक्तं बुद्धिकर्मणी अपि हि प्रतेत्यभिज्ञायेते । ते अपि हि नित्ये प्राप्नुत इति हि स्याताम् । नित्ये यदितो प्रत्यक्षे न ह्यप्रत्यक्षे प्रत्यभिज्ञा प्राप्नोति ।

ननु च भेदाग्रहणं प्रत्यभिज्ञातत्वबुद्धिकर्मणोऽप्यस्तीत्युक्तं कार्यत्वगम्यत्वादनुमेयानां सत्यं यदि भिदाग्रणं प्रत्यभिज्ञा तग्रहणं तु प्रत्यभिज्ञा कार्यं हि कारणमस्तीत्येतावति ज्ञानमुत्पादयति न पुनस्तद्वान्यद्वेति । प्रत्यभिज्ञा तु तदेवेदमिति प्रसिद्धा लोके ह्यमुसुनन्यशब्दस्य भावादन्योऽद्यतन इति चेदिति किमत्रानुक्तमुक्तं भाष्यकारेण ।

ननु सत्यां प्रत्यभिज्ञायामनुपलंभे कारणान्तरं कल्पनीयमित्युक्तम् । कल्पिताः स्तिमिता वायवस्तदपगमे चोपलब्धरिति संयोगवियोगा आगमहेतवः । किमन्यदवशिष्यते हि इदमवशिष्यते उपलब्धं स्वनुपलभ्यमानं नास्तीत्यस्य ज्ञानस्यागोचरतामापद्यते न ह्यत्यन्तानुपलभ्यमानं नास्तीति स्कन्दमास्कन्दयति यद्युपलब्धमपि न गोचरीभवति । अनास्पदमेवेदमभ्युपगतं भवति इत्यभ्युपगतं चैतन्नास्तीति अस्यार्थस्यसान्निकृष्टस्य । तस्मादभावो विषयाखादनेन वा विषयेण विषयी वक्तव्यः । तस्माज्ज्वालादिष्विव शब्देप्यापतिता प्रत्यभिज्ञा । अहो बातनुपलब्धावविवेकोऽयं यथैवात्यन्तानुपलब्धविषयानुपलब्धिर्नास्तीत्यस्य ज्ञानस्योत्पत्तौ नेष्ट तद्ग्रहणविषयाद्यर्थे । तस्मादनुपस्थितिमात्रमेवेदं यदन्तरा शब्दे । तथा च लौकिका जायादिषु नानुपलब्धिमात्रेण नास्तीति अवगच्छन्ति । पुनर्दर्शने विश्वासदर्शनात् । तस्मात् सप्रत्यभिज्ञप्रत्यक्षसव्यपेक्षोऽयं प्रमाणाभावस्तत्र वक्तव्यः । कुतः । सापेक्षत्वादभावस्य निरपेक्षत्वात् प्रत्यक्षस्य तदभेदानुपूर्व्या सिद्धामित्यनेनोक्तम् यदुप्यत्रानुमानं सर्वभावविषयमुक्तं नास्तितावगतौ तदप्युत्र न संभवति । अन्ते क्षयदर्शनादिति हि तत्र हेतुः । न च शब्दं ते क्षयोऽस्ति अतो न तेनापि बाध्यत इयं प्रत्यभिज्ञा घटादिषु कदाचिदाकम्पयत्यपि अनपक्षेत्वादिति सत्यामपि प्रत्यभिज्ञायां कदाचिदसमवायिकारणोपलब्धिः अनित्यताशङ्क्येत घटादीनामिव । तदप्यत्र दर्शनाभावन्नास्तीति स्थिता प्रत्यभिज्ञा तत्प्रमेयतया च नित्यत्वं शब्दस्य

प्रख्याभावादिति । विपक्षताया असिद्धाया शङ्कां निराकरोति । सेयमाशङ्कोपन्यस्यते वा पुरुषगतः संयोगविभागैः बुद्धिर्भवतीति । तथा च शिक्षाक्षराण्यनुगुणानि दृश्यन्ते वायुरापद्यन्ते शब्दतामिति तदिदं निराक्रियते यदि वायवीयः स्यात् वायोः सन्निवेशविशेषः स्यात् न च वायवीयान् विशेषन् उपलभामहे ।

ननु चाक्षुषो वायुः स्पर्शनमप्युपलम्भनमेव तेनोपलब्धाः स्युः । न चोपलभामहे । तस्मादप्रतिपक्षात् प्रत्यभिज्ञा कथं तर्हि शिक्षाक्षराणां भेदायत्तत्वाच्छब्दोपलब्धेस्तदुपचारः तथा वेदाक्षराण्यस्मिन् पक्षेऽनुगुणतराणि दृश्यन्ते वाचा विरूपनित्ययेति । कोह्यत्रातिशयः । नित्यताभिधानं श्रुत्या । तस्मात् प्रत्यभिज्ञाप्रमेयत्वान्नित्यता स्थिता शब्दे ।

उत्पत्तौ वावचनाः स्युरर्थस्यातन्निमित्तत्वात् । यथौत्पत्तिकः नित्यः शब्दः सम्बन्धश्च तथापि न चोदनालक्षणोऽर्थो धर्म इति किमिदमाब्धम् । इदमारब्धम् । वृद्धव्यवहारादौत्पत्तित्वमुक्तं शब्दार्थज्ञानस्य । वृद्धव्यवहारश्च प्रमाणान्तरावगम्यवाक्येनार्थं प्रतिपादयतः कस्यचित् कश्चिदन्यः प्रतिपद्यते । तत्प्रतिपत्त्या बाधो विजानाति अनेनैव तत्प्रतिपाद्यत इति । प्रतिपत्तिश्च हानोपादानादिकार्यावगम्या । हानोपादानादि च प्रमाणान्तरप्रमितविषयमेव शक्यतेऽवगन्तुम् । नाप्रमितविषयम् । अतश्च प्रमाणान्तरप्रमितविषयमेवौत्पत्तिकत्वं शक्यतेऽवगन्तुम् । न पुनर्यत्र शब्दावगमपूर्वको व्यवहारः तत्रौत्पत्तित्वं शक्यावगमम् । तस्माद्वैदिकानामग्निहोत्रादीनामात्पत्तिकत्वं दुरवगमम् तस्मादौत्पत्तिकत्वक्लेशोऽनर्थकः । वेदप्रामाण्यसिद्ध्यर्थमौत्पत्तिकत्वमिष्यते न स्वतन्त्रागमवादिभिः । न च वृद्धव्यवहारात् औत्पत्तिकत्वं । वेदार्थप्रतिपत्तावभ्युपायतां प्रतिपत्तुं क्षमं किमिति न क्षमं समुदायाद्धि वृद्धव्यवहारार्थोऽवगतः । न चासौ समुदायो वेदप्रयुक्तः । तस्मान्न निमित्ततां प्रतिपद्यते ।

ननु चान्वयव्यतिरेकाभ्यां वृद्धव्यवहारादेव पदार्थपूर्वको वाक्यार्थोऽवगम्यते । आवापोद्वापाभ्यां हि देवदत्त गामभ्याज शुक्लां देवदत्त गामभ्याज कृष्णां विष्णुमित्र गामभ्याज शुक्लां देवदत्त गां बधान रक्तामित्येकत्रान्वितशुक्लार्थान्यत्रापोद्धृतशुक्लार्थोऽन्वितइत्यार्थाश्चन्यत्रापोद्धृताभ्यां अर्थोऽन्वितबाधानार्थश्च अतोऽवगम्यते पदेभ्यः पदार्थ एवावधार्यते वाक्यार्थः पदार्थसमुदायेन वान्यार्थो गम्यते ।

अन्यथा ह्येकपदोद्धारे सकलवाक्यार्थावगतिरेव न स्यात् । पदार्थमात्रस्य । तस्मात् पदेभ्यः पदार्थाः । पदार्थेभ्यः परस्परान्वितावगतिः । यदि पदेभ्यः पदार्था अवसीयन्ते पदार्थेभ्यः परस्परान्वयः किं पदार्थनिमित्तक एव वाक्यार्थः । ओमित्युच्यते । कस्य पदार्थस्य कस्मिन्नन्वये हेतुत्वं सर्वस्य सर्वास्मिन्निति ब्रूमः । एवं तर्हि सर्ववाक्यार्थावगतिः सर्वस्मात् नियमे वा हेतुर्वक्तव्यः इत्थंभूते-नेत्थंभूतोऽन्वयः प्रतिपाद्यते इति । न च तत्र वृद्धव्यवहारप्रयोगं मुक्त्वान्यत् कारण-मुपलभामहे । तस्माद्यत्र समुदायः प्रयुक्तः तत्रैव पदं पदार्थमवगमयति पदार्थश्च पदार्थान्तरेणान्वितमात्मानमिति प्रयोगप्रतिपत्तिमूलेयं कल्पना । अतोऽन्वयव्यति-रेकेवापि प्रतिपत्तिविषयावेव । सत्यां हि प्रतिपत्तौ अपोद्धारावगतिव्यवहारे व्युत्पाद्य-स्यार्थस्यावगतिश्च प्रमाणान्तरप्रमितविषयैव हानोपपानावगम्यत्वात् व्युत्पाद्यतामि-त्युक्तम् । यत्र प्रमाणेनास्मिन्नर्थे प्रयुक्त इति न ज्ञायते प्रयोगादेवार्थोऽवगन्तव्यः । तत्र कथं निमित्तता शक्यते कल्पयितुम् पदपदार्थयोः प्रतिपत्तिपूर्वकत्वान्निमित्ता भावस्य । न पुनर्निमित्तावगमादेव नैमित्तिकावगतिः । यस्मिन् हि सति यद्भवति तद्दर्शनादस्येदं निमित्तमिति भवति मतिः । न पुनस्तत्सम्भवादेव । केन वोक्तमन्यथावगमादेव नैमित्तिकावगमादेव निमित्तावगतिः । गम्यते च अग्निहोत्रं जुहुयात् स्वर्गकाम इति पदार्थान्वितो वाक्यार्थः । अतोऽत्रपि पदपदर्थयो-र्निमित्तता केन वार्यते कथं पुनशक्यतेऽन्वितपदार्थको वाक्यार्थ इति । नन्वेतस्मादेव वाक्यात् । निमित्तादेव नैमित्तिकावगतिरित्युक्तम् । वृद्धव्यवहारे हि हानोपादानादिगम्यनैमित्तिकत्वमिह पुनर्वचनादेव हानोपादाने प्रवर्तेते । तस्माद्विपरीतम् ।

ननु च वृद्धव्यवहारेऽपि प्रतिपत्तौ वाक्यादेवार्थं प्रतिपद्यन्ते व्यालस्तु पार्श्वस्थः शब्दार्थयोः सम्बन्धहानोपादानाभ्यां वेत्ति सत्यमसावपि सम्बन्ध-ज्ञानोत्तरकालं ततो विजानाति निमित्तान्नैमित्तिकं वेदे पुनरविज्ञातानिमित्तिक-सम्बन्धः कस्य निमित्ततां विजानाति कस्य वा नैमित्तिकत्वम् ।

अथ सार्थान्वितोमान्यदृष्टमनुमानं क्रियते वृद्धव्नवहारे पदार्थयोर्निमित्तभावो दृष्टः । वेदेऽपि त एव पदार्थाः । तस्माद्वेदेऽपि स्वार्थान्वितो निमित्तमिति ।

एवं तर्हि कियन्तः कस्य निमित्तात्तप्रमाणं नास्ति । यावन्तो यस्यामवगतौ प्रतीयन्त इति चेत् अवगतिपूर्वकमेव तर्हि निमित्तत्वं न सामान्यतोदृष्टनिमित्तकम् ।

न चावगतिः प्रमाणमस्तीत्युक्तं तत् सामान्यतोदृष्टनिबन्धनैवेयं भ्रान्तिसामयिकी वा दृष्टव्यवहारपूर्वको दृष्टावगतिः लोकसिद्धैर्वा संज्ञासंज्ञिसम्बधं कृत्वा वैदिको व्यवहारः प्रवर्तितः कैश्चित् ।

ननु कार्यैक्यनिबन्धनमेव वाक्यत्वं भविष्यति। कार्यैक्यं च नियोगैक्य मनियोगैक्यं चानिबन्धविनिर्मोकादित्युक्तं नियोगार्थश्च लोके वेदेऽपि स एवेत्येतदुक्तं प्राप्ताप्राप्तविकेन हि प्रेषणोदयो विहिता तस्मान्निमित्तपूर्वकेणन दोषः । सिद्धं सामान्यतो दृष्टमनुमानं निमित्तावगतौ। तदिदमयुक्तं किं नियोगार्थः प्रमाणान्तरानिर्ज्ञातार्थतया लोकेऽर्थावगतौ निमित्ततया दृष्टः । नेति ब्रूमः प्रथमश्रुतः किं न प्रत्याययतीत्यनतिक्रमणीयोऽयं हेतुः। एवं तर्हि तदर्थमेदस्यापि प्रमाणान्तरं मृग्यम्। अनुबन्धाश्च तद्भेदानुवर्तिनो लोके दृष्टाः । न पुनस्तदनुवर्ति भेदः । तस्मात् परस्परान्वयिता न प्रयोगावच्छेदमन्यतो विज्ञाय शक्यतेऽवगन्तुम् । न चासावच्छेदः प्रमाणान्तरभावात् । वेदे विद्यते तस्मात् दर्शनान्तरं मृग्यम् । न चेष्टं स्वतन्त्रागमवादिनामिदम् । न च स्वभावादर्थावगतिरित्युक्तम् । अतः प्रतीयमानपदार्थान्वयी वाक्यार्थः न प्रमाणन्तरापेक्षेति गहनेयं न्यायपदवी । कथमियमवग्राह्यनीयेति श्रुतियुक्ता सम्प्रधार्या । अत एक एवायं बहुधा विकल्प्यावगम्यते लोके वेदे चेति बह्मविदो मन्यन्ते । तस्माद्विवर्त एवायमिति ब्रह्मविद्भिरवगन्तव्यम् । वेदविद्भिरित्यर्थः । आह । कथं पुनः विवर्तपक्षे नाय दोषः । एकतावगतिस्तावन्नैवास्ति । श्रोत्रग्रहणे ह्यर्थे लोक इत्यनेन प्रतिपादितत्वात् । तदेवेदं दुरुक्तम् । कार्यविरोधादित्युच्यते । किं कार्यतः प्रत्यक्षमात्मानं लभते । मा भूत्प्रत्यक्षमनुमानमपि प्रमाणवगतियुक्तं भवद्भिरप्यानुमानिकमेव प्रामाण्यं सर्वप्रत्युक्तं अनुमानादवगतर्स्यार्थस्य कथमेकत्वमनेकत्वंकथं वा किं वा एकतया विना न सिध्यति ।

इदं न सिद्ध्यति । न ह्युपाया कल्पिताः प्राप्नुवन्ति एक वाक्यतौ श्रुत्यामवच्छेदादि कल्पिताः स्युः । न चैकता च श्रुतिर्युक्तानुमनादिति चोदितम् । नायं दोषः। अनुमानप्रमाणत्वमवच्छिद्य ततः पुनरेकतामवयवैरिति शुक्लः पट इत्येवमादिषु। तदिदमागमात् प्रतिपन्नामकत्वं प्रत्यस्तमिति शेषागमविकल्पं स्वयं प्रह्म प्रकाशते इति यदुच्यते श्रोत्रग्रहणे ह्यर्थे लोके शब्दशब्दः प्रसिद्ध इति । तदप्यागमविरुद्धम् ; गौरिति शब्दो गौरित्यर्थं गौरिति विज्ञानमेकाभिधाननिर्देशान्न च भिन्नस्य युगपदेकाभिधानं संभवति । कथं पुनः यौगपद्यावगमो वाचकज्ञानवाच्यानां परस्परापेक्षिणी स्वरूपावगतिर्यतः । अतः स्वयदप्युक्तं सजातीयात्र गमशून्या न सामा-

न्यावगतिरस्तीति । तदयुक्तम् भेदनिबन्धना ह्येषा युक्तिर्विद्यमानस्य ह्यवमर्शो भवन्ति न पुनः कल्पितस्य । एवं चैकत्वमेकाभिधाननिर्देशात्ततः किमिदं तत्कल्पनयैव वृद्धव्यवहारस्य निमित्ततोच्यते । तत्रेदानीं कल्पनाबीजं बहुधा कथ्यते पदमाद्यमित्येवमादि । तस्मात् पदार्थवेदनेन संस्कृता अभेदं प्रतिपद्यन्त इत्यर्थः । न चैतावता अप्रामाण्यं श्रुतेः प्रमेये शक्तिसद्भावादित्युक्तं ततोनागमकी कल्पना प्रत्यवायाय नावैदिकीत्येतदप्युक्तं परमार्थपरत्वाद्वैदिकस्य । अतः सिद्धमौत्पत्तिकत्वमस्मत्पक्षे । भेदाभिधानपक्षे न सिद्धप्रति । तथा प्रदर्शितम् । अत एव च यथाविनियोग मन्त्रामन्त्राविदो वर्णयन्ति । भेदे हि नियतमिधानं स्यात् । अत उणादयो बहुलमित्येवमाद्यनागमपूर्वकमेव स्यात् । न चैतत्तवापीष्टम् । उपदेशश्चार्थवानङ्गविद्यानां भेदपक्षे हि लोकत एव नियतत्वाद्भेदानां किमन्यदाख्यायते अस्मत्पक्षे पुनरागमानुसारी विकल्पः । आनन्त्याच्चागमस्योपदेशोऽर्थवान् । अतश्चायं भेदव्यपदेशो लौकिकानां वैदिकानां छन्दसि भाषायां निगम इति यागमभेदाश्चोपपन्ना भवन्ति केनचित् क्वचिदवच्छिद्य तदेव प्रदर्शितं भवति । अत एवैकादशद्वादशकपालमेकं कर्म । अन्यथा हि भेदावगम एकत्वाभिधानं प्रलापः । न केवलमत्राभिधानसन्दर्भे कार्यावगम्यत्वाच्च प्रमाणताया एकत्वाच्च कार्यस्य नानाभिधानं न प्रमाणेनोपपद्यते । वाक्यसमासयोश्चावगम्यत्वेऽपि तुल्यकल्पनाप्रतिषेधार्थत्वावचनमागमाविकल्पज्ञापनायोपपन्नार्थं भवति । अन्यथा हि वस्त्वेव निरोधकं अत एवाभिधेयवशवर्तिशक्तिनिरूपणं नामाख्यातोपसर्गनिपातानां भेदे हि स्वरूपभेदः पारमार्थिकः । तत्र प्रत्यभिज्ञाने सति विलम्बते प्रलम्बते विप्र इत्यन्यत्वं स्यात् । तथा च भवत्यादिषु वर्ण्यमानवादिनो राज्ञः पुरुषस्य हस्तिन इति पदद्वयसम्बन्धोपि भवति न राजपुरुषस्य हस्तिन इति इदमुपगोरिदमपत्यस्येदं न पुनरौपगवस्येदमिति । तथाच करणं करणानेति विभक्तेरुत्पत्तिरनुत्पत्तिश्च तथा सुष्वातवः अश्वो गर्दभः अश्वति गर्दभतीति। तथा चाष्टादशप्रभेदमकारकुलमर्थप्रतिपत्तय अन्यथा ह्येकत्वाद्वस्तुनः सर्वार्थप्रतिपत्तिर्वा स्यात् । व्यवस्था नोपपद्यते । प्रमाणान्तरप्रमिते वार्थे एकत्वाद्वस्तुनः सर्वार्थावगतिमृषा । सुरभि चन्दनं शीतो वायुरिति चन्दनस्य सुरभिः वायोः शीत इत्येव स्यादुपसर्गनिपातानां क्वचिद्विशेषणार्थत्वं क्वचिदानर्थक्यं क्वचिद्विपरीतार्थता तद्भावो नोपपद्यते । पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तद्वशादपि निर्णयो दुर्वचः पदभेदे च पदार्थो विनाशः स्यात् । आनर्थक्ये चैकवाक्यता कथं विभागज्ञानं च वर्णोपजन एव स्यात् ।

आगमविकल्पपक्षे तु सर्वमुपपन्नम् । आगमविकल्पावगमः कुतः इति चेदागमान्तरादेव । तदुक्तम् ।

ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम् ।

अनिदम्प्रथमता चास्यानादित्वात् संसरन् शक्यते वक्तुम् । सेयमनपेक्षता प्राणाण्यहेतुः । भेदपक्षे सर्वमिदमसमञ्जसम् । दर्शयति च ज्ञानप्रधानकतृवेदोपस्थित्यावबोधकत्वं वेदस्य वेदता कथं यदल्पं तन्मर्त्यम् । अथ यद्भूम तदमृतं किं तदवल्यमवच्छेदः । कल्पनीयस्यावच्छेदो दृष्टो न पुनस्तत्त्वस्य । यावद्‌ब्रह्मो गतमित्यादि सर्वमुपपन्नार्थं भवति । अन्यथा हि विरोधः स्यात् । विरोधे याप्रामाण्यं तस्मादेकानुगुणमिदं ब्रह्मराशिमागमविद्या व्याचक्षते । सोऽयमागमः ।

तदिदं तत्त्वम् । त इमे ब्रह्मविदः य एवं विजानते । तस्मान्निवर्तस्वैतस्माद्भेदग्रहात् संसारान् पातिनः ।

ननु चात्रापि वृद्धव्यवहारव्युत्पत्तिर्नैवोपकारिका । आगमतश्चेमे विकल्पाः प्रवर्तन्ते किं वृद्धव्यवहारेण अथ वृद्धव्यवहारव्युत्पत्त्या विकल्पितानागमविकल्पानां प्रतिपद्यन्ते । भेदव्यवहारेऽपि तुल्यम् ।

अथागमत एव विकल्पाः प्रतिपद्यन्ते वृद्धव्यवहारव्युत्पन्नान्निमित्तावगतिः क्वोपयुज्यते तस्मादयमपि भेदव्यवहारेऽपितुतुल्यं । अथागमत एवविकल्पाः प्रतिपद्यन्ते वृद्धव्यवहारव्युत्पन्नानां निमित्तावगतिक्वोपयुज्यते तस्मादयमपि भेदपक्षपर्यवसित एव पक्षः । अथेदानीमयमपरः प्रकारः । जातिगुणयोरिवैकद्रव्यनिवेशादेकद्रव्यसम्बन्धः प्रतीयते । तद्वज्जातिगुणशब्दयोरपि सन्निहिततयोच्चरितयोः तद्द्वारेणैकार्थतावगम्यत इति चेत् तन्न व्युत्पत्तौ निमित्तमात्रतयावगतेः निमित्तमात्रतयैवावगतिः प्राप्नोति । परमानर्थक्यमिति चेन्न ह्यानर्थक्यमर्थान्तरावगतौ हेतुः । तस्मादनर्थक एवायं वृत्तव्यवहारनिबन्धनः शब्दार्थयोरौत्पत्तिकसम्बन्धाभिधानक्लेशः । तस्मात् पूर्वोक्तमेव कृतकत्वं सम्बन्धस्येति स्थितम् ।

यद्यप्यौत्पत्तिको नित्यः शब्दः सम्बन्धश्च । तथापि न चोदनालक्षणो धर्म इति वृद्धव्यवहारस्यानिमित्तताप्रतिज्ञेयं वैदिकव्यवहारे यथोक्तचोदना हि वाक्यं न ह्यग्निहोत्रात् स्वर्गो भवतीति गम्यत इति वाक्यात् प्रतिपत्तियथोक्तहेत्वभिधानपातनिकेयम् । यद्येवं ततः किम् । न चायं सामुदायो वृद्धव्य-

वहारसिद्धिश्रुतो अयुक्तः । तस्मादनिमित्तता पूर्वोक्तस्य भाष्यस्यार्थतया वर्णिता यो पदानि ह्यमूनि प्रयुक्तानि । एषां नित्योऽर्थ इति वृत्तव्यवहारे हि पदानामौत्पत्तिकत्वं निमित्ततया सिद्धम् । तस्मिन्नेव नैमित्तिके इह पुनर्नैमित्तिकान्तरावगतावसिद्ध एव निमित्तभावः । कुतः अप्रयुक्तः समुदायो यस्मादेवं सति कृतिमत्वमुपवर्णितम् । न च पदार्था एव वाक्यार्थ इति परस्परानन्विततां दर्शयति । परस्परनन्वितता हि विशेष इत्युच्यते । सामान्ये हि पदं वर्तिष्यते विशेषो वाक्यमित्यनेन व्यावहारिकी पदव्युत्पत्तिरनर्थिकेत्युक्तं विस्तार श्लोकः न पदार्थाद्वाक्यावगति सम्बन्धादिति हि । प्रयोकशून्या परस्परान्वितता शक्यतेऽवगन्तुमिति पूर्वोक्तानवगतिरेतद्भाष्यनिबन्धना असति च सम्बन्धे कस्मिश्चिदर्थेऽवगतेऽर्थान्तरमवगम्यते । एकस्मिन्नवगते सर्वमवगतं स्यादित्यपदार्थानिमित्तत्वे वाक्यार्थस्य हेतुः । वर्णितश्चायमप्रयुक्तादपि वाक्यादसति च सम्बन्धारे स्वभावादेवावगम्यत इत्यनेनानुबन्धविनिर्मुक्तं नियोगैक्यं वेदे दर्शयतीति वर्णितं शब्दो धर्ममात्मीयं व्युत्क्रामेत । न चैष शब्दधर्मो यदुपयुक्ताच्छब्दादर्थोऽवगम्यत इति कार्यानुवर्तिनामनुबन्धानामनुबन्धविनिर्मुक्तौ दर्शयति । यथोदितेन हि प्रथमश्रुतात् कुतश्चन शब्दात् केचिदर्थं प्रतियन्तीति सामान्यतो दृष्टविरोधः पूर्वोक्तः तदभिधीयते पदधर्मोऽयं न वाक्यधर्मः वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृश्यन्त इति । कथं तर्ह्यर्थानवगमः अवगतेर्विघ्नः पदार्थमात्रव्युत्पत्तित एव वृद्धव्यवहारो वेदार्थावगतौ हेतुरित्युपन्यस्तमनेन सभाष्येण प्रागुक्तमेव । नैतदेवं यदि प्रथमश्रुतादप्यवगच्छेयुः

अन्ये च न त्वपदार्थविदोऽवगच्छन्तीति न ह्यप्रयुक्तासमुदायादवगन्तुं शक्यते । यत्तु पदार्थविदोऽगपच्छन्ति तत् सामान्यतोदृष्टभ्रान्त्या पूर्वोक्तयेति मन्तव्यम् ।

ननु च पदार्थविद्भिरवगच्छद्भिरकृतक एव वाक्यार्थसम्बन्धो भवति । पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथावदर्थं द्वितीयादिश्रवणेनेति । किमत्र भ्रान्त्यामागमनिमित्तानुगुण्याद्वरं निमित्ततैव यथा वृद्धव्यवहार एव द्वितीयादिश्रवणं अयं पूर्वोपवर्णितोऽर्थः । नेति ब्रूमः यदि वाक्यान्त्यवर्णः पूर्ववर्णजनितसंस्कारसहितोऽपदार्थेभ्योऽर्थान्तरं प्रतिपादयति । क उपकारस्तदानीं पदर्थज्ञानादवकल्पत इति पूर्वोक्तं तन्निमित्तत्वं वृद्धव्यवहारस्य कल्पनायामपि तुल्यमित्यस्यार्थः ।

नन्वेवं संभविष्यति मामान्यवाचिनः पदस्य गौरिवाश्व इति वा विशेषकं शुक्ल इति वा कृष्ण इति वा पदमन्तिकादुपनिपतति यदा तदा वाक्यार्थोऽवगम्यत इति । तदेतत् कार्यैक्यनिबन्धनं यदुक्तं । अर्थयोारेव बुद्ध्यङ्कत्वोपपत्तिहेतुत्वं तदुपन्यस्तम् । न हि कथमिव गौरिति चाश्व इति वा समान्यवाचिनः पदात् सर्वगविषु सर्वाश्वेषु बुद्धिरनुपसर्पन्ती श्रुतिजानित वाक्यानुरोधेन कुतश्चिद्विशेषा-दप्रवर्तेतेति निमित्तमात्रव्युत्पत्तेर्व्यवहारव्युत्पत्तौ पदार्थमात्रावगतिः प्राप्नोति न परस्परान्वय इति प्रागुक्तमनेनोक्तं अर्थानिमित्तत्वात्तेन शाब्दं शाब्दं त्विदं विचार्यते तत्र च यावत्प्रयोगिण्येव निमित्ततोक्ता । न च प्रयोगव्युत्पत्तौ पदार्थान्तरव्यावृत्त्या पदस्य स्वार्थनिमित्तता दृष्टा । येन पदान्तरप्रयोगात् सर्वगवीषु प्रत्ययो व्यावृत्तः शब्दादिति शक्यते वक्तुम् ।

नन्वेवं सत्यानर्थक्यं भविष्यति । भवतु न ह्यीदमानर्थक्यं नानार्था-न्तरपरतया कल्पयितुं क्षमम् । आनर्थक्यमेव हि तन्न स्यात् । तस्मात् कृत्रिमः सम्बन्धः । प्रत्यस्तमितमनपेक्षत्वम् । समर्थितश्चायं हेतुर्वाक्यात्मकत्वात् कृतको वेद इति ॥

तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ।

अत्रोच्यते स्यादनुपायत्वम् । वृद्धव्यवहारस्य यदि पदर्थान्यत्वं स्यात् । आवापोद्धारतैव केवलं अन्या कथं लौकिकवैदिकयोः पदार्थयोरन्यत्वानवगतिः । किमुदं प्रत्युक्तम् । न पुनरुच्यते परस्परान्वये हि पदार्थानां वाक्यार्थ इत्युक्तम् न पदार्थाः । तस्मान्न पदार्थप्रत्यभिज्ञानमन्वये हेतुः । प्रमाणान्तरं च नास्त्यस्मिन् प्रयुक्तमित्युक्तं ततः प्रयोगशून्योऽन्वयो निर्बीजः । पदार्थानभिज्ञो मान्[प्रि]यः कथमनभिज्ञः पादार्थास्तावन्नाव्यतिषक्ताः क्वचिदुपयुज्यन्ते अन्ततोऽस्त्यर्थेन ततः किमिदं ततस्तत्पतिपत्तये हि शब्दार्थव्यवहारः व्यवहारे च यथाविधिव्यतिषङ्गमि-वावापोद्धारौ । तस्मात् व्यतिषक्तार्थाभिधानं व्यातिषक्तेनावगम्यतेव्यतिषङ्गस्य किमेवं भविष्यति नानन्विताभिधायी शब्द उक्तो भविष्यति । ततश्च कार्याभिधायिता लोके नियोगस्यावगता । आचार्यचोदितः करोमीति हि दर्शितम् ।

ननु च प्रेषणादयोऽप्यवगम्यन्ते । लोके उपाधयो हि ते न शब्दार्थाः । केन पुनरमी उपाधयो नाम । उपाधयो हि तटस्थाः प्रयोगदर्शनमात्राच्छब्दार्थं

विशेषतोऽवस्थापयन्ति यथा इति हर्यतिपेयस्य प्रस्तुतत्वम् । एवासौ नियोगः समहीनज्यायोभिः प्रयुज्यमानः प्रेषणादिव्यपदेशं लभते । प्रवर्तकत्वं तु शब्दार्थः सर्वत्रापरित्यागात् । अतो नियोगाभिधानम् । नियोगाभिधाने च सति साध्यतत्साध्यनव्यतिषङ्गोऽवगम्यते । साधनाभिधाने च साध्यव्यतिषङ्गः।

अत इदमुक्तम् तद्भूतानामात्मीयेष्वर्थेषु व्यस्थितानां व्यतिषङ्गावगतेर्निमित्तत्वमुपपद्यत इति ।

ननु च प्रयोगे सत्येतद्युक्तं वक्तुम् । केन चोक्तं प्रयोगे सतीति एवंभूतेषु हि दृष्टो लौकिकः प्रयोगः । वैदिकोपिहितएवातस्तथा भूतेष्वेवायं प्रयोगः एवं तर्हि निमित्ततो नैमित्तिकावगतिः । मन्द मेवं कथं नोपायोऽयम् न ह्यन्वितोऽन्वयशून्यः शक्यते प्रतिवक्तुम् । अत एते पदार्थाः । एषामभिधानानि पदानि तदिदं वाक्यपदीयं अन्यथा ह्यवगम्यमानः पदपदार्थविवेकोऽपह्नुतो भवति । अविद्यमानोऽप्रतिपन्नः । तस्मान्न कार्यतस्तावद्वाक्यवाक्यार्थयोः पदपदार्थाभ्यामन्यत्वं कल्पयितुं क्षमा प्रत्यभिज्ञा प्रत्यक्षतस्तु भेदावगमो नास्तीयुक्तम् । अतः क्रियार्थेन समाम्नायः ।

ननु नैवावश्यं क्रियार्थतयैवाम्नानं लोके । अस्ति तावत् क्रियार्थता वेदे तद्विषयमिदमधिकरणं मन्यते भवान् लोकविषयमिदमधिकरणं वा मन्यते भवान् । न्यायाभिधानसाम्यात् सर्वत्रेति मन्यामहे । भवतु सर्वत्र ।

ननु च क्रियार्थेनेत्यव्यापकम् । व्यवहाराक्रियैव क्रियेति मत्वा शाम्यतु भवान् । अतः सिद्धमर्थस्य तन्निमित्तत्वादिति वैदिकानां सानिमित्तत्वं तेष्वेव पदार्थेष्वित्यन्वितेष्वित्यर्थः । कुतः नानपेक्षपदार्थान् पार्थगर्थ्येन वाक्यार्थः प्रतीते न चेत् प्रतीयते कस्य वाक्यं प्रमाणतया कल्पयिष्यते ।

ननु चान्वयो न पदार्थः स च वाक्यार्थो भविष्यति । अतश्चार्थाद्वाक्यमपि पदेयोऽन्यदिति गम्यते । नन्वर्थापत्त्येत्यनेनेदमुक्तम् तन्न । अर्थस्य तन्निमित्तत्वादित्यन्विताभिधानेन कथितोऽस्यार्थः अर्थापत्तिर्नास्तीति ।

अपि चान्वयव्यतिरेकाभ्यामेतदवगम्यते भवति हि कदाचिदियमनवस्था मानसाद्युपचराचरितेभ्योऽपि यदेभ्यो न पदार्था अवधार्यन्ते न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति । न च नियोगतो वाक्यार्थमवगच्छेयुः

न च नियोगतो वाक्यामवगच्छेयुः अर्थस्य पार्थगर्थ्यमभविष्यत् नियोगतस्तु नावगच्छन्तीति किमनेनानुक्तमुक्तम् न खलु किञ्चित् प्रतिज्ञार्थस्यानन्यत्वमेव तत्सिद्ध्ये हेतुरुपन्यस्तः कथम् यद्यसंश्लिष्टपदार्थ एव वाक्यार्थोऽवगम्यते व्युत्पत्तिमात्रे पदार्थावगतिः कस्मान्न व्युत्पत्त्यवमर्शशून्यमपि कदाचिज्ज्ञानं भवत्यति रूढव्यवहारस्य यथा धूमान्महानसादिप्रदेशावमर्शशून्यस्याग्निज्ञानम् न च वाक्यार्थे निरूढव्यवहारस्याप्येवंरूपैवगतिर्दृष्टा । अतो न निमित्ततया पदार्था अवधार्यन्ते । किं तर्हि नैमित्तिकतयैव । किं पुनः कारणम् । निरूढव्यवहारस्य निमित्तानपेक्षा नैमित्तिकावगतिः प्रचुरसंस्कारो हि नावश्यं निमित्तव्यवहारमपेक्षते गन्ध इवाभ्यस्तपदवीको न तदयितामपेक्षते । अत्र पुनः सर्वदा तदपेक्षत्वात् तदेव प्रमेयमित्युच्यते । एवं तर्हि पदार्थेऽल्पो वाक्यार्थ इति कथमयं व्यतिरेकः । अन्वितेभ्योऽन्वयप्रत्यय इति ।

अपि च अन्तरेणापि पदोच्चारणं च शोक्तामवगच्छति अवगच्छत्येवासौ शुक्लगुणकं द्रव्यमिति किमन्वयव्यतिरेकभाष्यशेषमेतत् ओमित्युच्यते । तत्र च पदार्थस्य व्यतिरेकदर्शनमिह चान्वयस्य सत्यमेवं न त्वेतावन्मात्रमेव किमतिरिच्यते । इदमतिरिच्यते । यदि हि व्युत्पत्तौ पदानां पदार्थ एव व्युत्पत्तिः तदानन्वितपदार्थदर्शने स्मरणानुपपत्तिः स्मर्यते अतः सिद्धमन्विताभिधानम् । नास्य पदसमुदायेन सह सम्बन्धः इति न समुदायभूतानां प्रामाण्यम् । किं तर्ह्यन्वयव्यातिरेकगम्यस्वार्थव्यापृतानामेव । यत्तु श्रोतः पदार्थो वाक्यानुरोधेन कुतश्चिद्विशेषादपवर्तितुमर्हतीति कथं व्युत्पत्तिशून्यैवावगतिः । शक्यतेऽभिधातुमित्यभिप्रायः । परिहारस्तु सत्यमेवमेतदिति व्यवहारार्थत्वात् प्रयोगस्य विशेषात्मकत्वाच्च व्यवहारस्यान्विताvगतिरेव पदार्थानां नान्वितार्थान्तरस्मरणं व्यवहारानङ्गत्वात् । तदिदमुक्तम् । यश्चार्थादर्थो न स चोदनार्थ इति स नेदानीं तदविवक्षितमिति प्रतीयमानस्यापि शब्दादविवक्षितत्वं शक्यते वक्तुम् । गम्यते च शब्दान्निमित्तात् अशब्दार्थश्चैते किमिदं शब्दान्तराभिधेयतयैव स्मरणे स्मृतेश्च प्रामाण्यात् । अतः शब्दनिमित्ततापि श्रोत्रैरेवोदिता प्रत्यक्षादीनामिव स्मरणीय एवं च गुणान्तरप्रतिषेधे न शब्दार्थ इति कल्पितनिमित्तरिहारात् परिहृतमपि च प्रातिपदिकानुच्चपन्ती द्वितीयादिविभक्तिरिति अन्वितार्थमेव प्रातिपदिकं स्मरन्ति । यतः करणवाचिनः प्रातिपदिकात् तृतीयां विदधाति । विभक्तयश्च परस्परान्वयप्रतिपादिकाः प्रयोगान्तरस्मृतस्यार्थस्या-

न्वयितां श्रुत्यैव दर्शयति । अतोऽभ्युच्चयोपपत्तिरियमविवक्षायां प्रत्युक्तमनुमानम् । कृतकत्वादिति वृद्धव्यवहारस्य निमित्तोपपत्त्या अपि चैते पूर्वोक्तः सम्बन्धः करणं शक्तिं दर्शयतीति ।

लोके पुनः प्रमाणान्तरप्रमितविषयतया युक्तैव तत्पूर्वकत्वात् शब्दव्यवहारस्य । तस्मात् पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थस्यप्रत्यय इति व्याख्यातम् । तस्मादुपपन्नं वृद्धव्यवहारस्य निमित्तमौत्पत्तिकत्वं सम्बन्धस्य वेदवाक्यार्थं प्रतिहेतुत्वं च विलम्बत इत्यादयस्तु शब्दप्रत्यभिज्ञयैव प्रत्युक्ताः अभिधाने हि स दोषसमासादीनां तत्परिहारोऽभिधीयते ॥

वेदांश्चैके सन्निकर्षं पुरुषाख्याः । पदवाक्यान्वय इति विभागाभिधानादविभक्तकार्यत्वाच्च विवेकः । यदुक्तम् दिस्मरणादिति विरुद्धं समाख्यया । किं कार्यनिबन्धनैवेयं समाख्या बाढम् असाधारणेन हि व्यपदेशो भवति साधारणं च प्रवक्तृत्वं कथं तर्हि कृते ग्रन्थे तेन प्रोक्तति च सूत्रद्वयं भगवतः प्रोक्तवचनमयुक्तम् समर्थानामिति विरोधात्तस्मात् कार्यतैव वेदस्यावगम्यते । केयं कार्यता नित्यत्वाच्छब्दाख्यानामौत्पत्तिकत्वाच्च सम्बन्धस्य प्रमाणान्तरापेक्षिता । तथा च तदनुरूपं वेदवचो दृश्यते बबरः प्रावाहणिरित्येवमादि ।

अत्रोच्यते स्यादेतदेवम् यद्यन्यथा असाधारणव्यपदेशो नोपपद्यते प्रकर्षादपि ह्यसाधारणव्यपदेशो लोके यथावेदश्रणेन वेदप्रामाण्यं समाख्याय अत एव सूत्रान्वयप्रणयनं भगवतः पाणिनेः समर्थानामिति वाविरोधः ।

यदुक्तं बबरः प्रावाहणिरिति स्थिते प्रामाण्ये गुणवादं वक्ष्यति वक्ष्यमाणमेव च भाष्यकारेणात्र व्याख्यानं कृतम् किमर्थं वक्ष्याम इति नोक्तं च सम्बन्धित्वोपन्यासार्थं न शक्यते ज्योतिष्टोमादिषु विध्युद्देशेषु कल्पयितुमेकवाक्यत्वाच्च वनस्पतय इत्येवमादीनामपि अविप्रतितः सुहृदुपदेशः इति सार्वजनीनमविपर्ययं दर्शयति तस्माच्चोदनैव प्रमाणं धर्मस्येति स्थितः प्रतिज्ञार्थः ॥

॥ इति बृहत्यां प्रथमाध्यायस्य प्रथमः पादः समाप्तः ॥

श्रीः

# मीमांसाभाष्यपरिशिष्टम्

(शालिकनाथप्रणीतम्)

हरते सर्वविघ्नानि कर्मसिद्धिविधायिने ।
तुभ्यमभ्यासवल्लेषा महागणपते नतिः ॥ १ ॥
प्रभाकरेण गुरुणा व्याख्यातार्थस्य भूयसः ।
मीमांसाभाष्यजातस्य परिशिष्टं विभज्यते ॥ २ ॥

## अथातो धर्मजिज्ञासा १--१--१.

अध्ययनविधेराचार्यकरणविधिसिद्धिमात्रप्रयोजनत्वेनाविवक्षितार्थतया स्वाध्यायाध्ययनस्य न वेदाध्ययनानन्तरा तद्धेतुका वेदार्थजिज्ञासावकल्पत इति न लौकिकार्थतया 'अथातः' इति पदद्वयमवकल्पत इति पारिभाषिकोऽस्यार्थ आश्रयणीयः ; लौकिकार्थाश्रयणे वार्थान्तरमध्याहृत्य लक्षणां गुणकल्पनां वाश्रित्य वर्णना न्याय्येत्याशङ्क्याह—लोक इति * १--१

## ॥ मीमांसाभाष्यपरिशिष्टमातृका ॥

श्रीरस्तु

हरते सर्वविघ्नानि कर्मसिद्धिविधायिने ।
तुभ्यमभ्यासवल्ले....गणपते नतिः ॥
प्रभाकरेण गुरुणा व्याख्यातार्थस्य भूयसः ।
मीमांसाभाष्यजातस्य परिशिष्टं विभज्यते ॥

अथातो धर्मजिज्ञासा. अध्ययनविधेराचार्यकरणविधिसिद्धिमात्रप्रयोजनत्वेनाविवक्षितार्थतया स्वाध्यायाध्ययनस्य न वेदाध्ययनानन्तरा तद्धेतुका वेदार्थजिज्ञासावकल्पत इति न लौकिकार्थतया अथात इति पदद्वयमवकल्पत इति पारिभाषिकोस्यार्थ आश्रयणीयः. लौकिकार्थाश्रयणे वार्थान्तरमध्याहृत्य लक्षणां गुणकल्पनां वाश्रित्य वर्णना याय्येत्याशङ्क्याह

वृद्धव्यवहारे यदर्थवाचकतयैव यानि पदानि प्रसिद्धानि तेषां पदनां सूत्रेष्वपि प्रयुक्तानां स एवार्थः, तस्यैव संभवात् ; न पुनः पारिभाषिकः, अर्थान्तराध्याहारेण वा वर्णनीय इत्यवगन्तव्यम् । यदा तु सर्वपदानामयं प्रकारः, तदा 'अथातः' शब्दयोरप्येषैव गतिरित्युक्तं भवति । सूत्रकाराभिप्रायेणापि
६–२ पदानामीदृश एवार्थोऽवगम्यत इत्याह—एवमित्यादि * एवंभूतार्थाश्रयणेनैव पदानामुत्तरत्र वेदवाक्यान्येव परं सूत्रैर्व्याख्यायन्ते ; इतरथा स्वपदानामप्यव्याख्याने दुर्ज्ञानतया व्याख्या कर्तव्येत्युभयव्याख्याने यत्नगौरवं सूत्रकारेणाश्रितं स्यात् ; न च तदाश्रितम् । तस्मादवगच्छामः—सूत्रकारस्याप्येवं प्रसिद्धार्थपरतैव पदानामभिमतेति ।

अत्र कश्चित् सूत्रे वेदाध्ययनस्यानुपात्ततया पुनरलौकिकार्थतामाशङ्कते
६–४ —तत्र लोक इत्यादिना * यद्यपि साक्षात् सूत्रे वेदाध्ययनमनुपात्तम्, तथापि धर्मजिज्ञासासामर्थ्येन वेदाध्ययनमाक्षिप्तमेवेति मत्वा परिहरति—
६–५ भवितव्यमित्यादिना *

मीमांसाभाष्यपरिशिष्टमातृका

वृद्धव्यवहारे यदर्थवाचकत्व........यैव यानि पदानि प्रसिद्धानि तेषां पदानां सूत्रेष्वपि प्रयुक्तानां स एवार्थः. तस्यैव संभवात्. न पुनः पारिभाषिकः अर्थान्तराध्याहारेण वा वर्णनीय इत्यवगन्तव्यम् । यदा तु सर्वपदानामयं प्रकारस्तदाथातःशब्दयोरप्येषैव गतिरित्युक्तं भवति । सूत्रकाराभिप्रायेणापि पदानामीदृश एवार्थोऽवगम्यत इत्याह एवमित्यादि । एवंभूतार्थाश्रयणेनैव पदानामुत्तरत्र वेदवाक्यान्येव परं सूत्रैर्व्याख्यायन्ते । इतरथा स्वपदानामव्यव......ख्याने दुर्ज्ञानतया व्याख्या कर्तव्येत्युभयव्याख्याने यत्नगे........णाश्रितं स्यात् । न च तदाश्रितं तस्मादवगच्छामः । सूत्रकारस्याप्येव........तैव पदानामभिमतेति । अत्र कश्चित् सूत्रे वेदाध्ययनस्यानुपा.... या पुनरलौकिकार्थतामाशङ्कते तत्र लोक इत्यादिना ।

यद्यपि साक्षात्सूत्रे वेदाध्ययनमनुपात्तं तथापि धर्मजिज्ञासासामर्थ्येन वेदाध्ययनमाक्षिप्तमेवेति मत्वा परिहरति. भवितव्यमित्यादिना ।

वेदं नानधीत्येत्यादि * आनन्तर्यमनूद्य—यदनन्तरं धर्मजिज्ञासां ९--१० कुर्यात् तद्वेदमधीत्य, नानधीत्य—इत्येकस्यां वचनव्यक्तौ विधीयते; अन्यस्यां वचनव्यक्तौ विपरीतम्—वेदमधीत्य इत्यनूद्यानन्तर्यमेव विधीयत इत्यर्थः। न चाध्ययनमात्रादपीति * फलमर्थवादेभ्योऽवगम्यते ; ततश्चाश्रूय- ११–२ माणाधिकारे स्वाध्यायाध्ययनविधावधिकारिणि कल्प्ये तदेवाधिकारिविशेषणतापन्नं फलं भविष्यतीति। ननु पर्णतादिष्विव फलश्रुतिरर्थवादो भविष्यति। मैवम् ; तेषां क्रतुप्रकरणे समाम्नानात् क्रत्वर्थत्वावगमे सत्यधिकारकल्पनाया अनवकाशत्वाद्युक्ता फलश्रुतेरर्थवादता ; अध्ययनस्य तु न प्रकरणाम्नानमित्यपरार्थतैव। ननु साक्षाद्दृष्टार्थावबोधोपयोग्यप्यध्ययनमक्षरसंस्कारार्थमेवेति परार्थत्वमस्त्येव। मन्द ! मैवम्, अध्ययनविधेरानर्थक्यप्रसङ्गात् विनापि विधिना तत्र प्रवृत्तिसिद्धेः। परार्थतयाक्षरसंस्कारार्थत्वेऽध्ययने प्रवृत्त्यनुपपत्तिरित्याशङ्क्याह–यदपि चेति * अयमभिप्रायः–अध्यापनविधिप्रयु- ११–३ क्त्यैव लब्धानुष्ठानेऽध्ययनविधावधिकारिणोऽनपेक्षितत्वात्तत्कल्पनायामसत्यां

मीमांसाभाष्यपरिशिष्टमातृका

वेदं नानधीत्येत्यादि. आनन्तर्यमनूद्य यदनन्तरं धर्मजिज्ञासां कुर्यात् । तद्वेदमधीत्य नानधीत्येत्येकस्यां वचनव्यक्तौ विधीयते । अन्यस्यां वचनव्यक्तौ विपरीतं वेदमधीत्येत्यनूद्यानन्तर्यमेव विधीयत इत्यर्थः ।

न चाध्ययनमात्रादपीति फलमर्थवादेभ्योऽवगम्यते । ततश्चाश्रूयमाणाधिकारे स्वाध्यायाध्ययनविधावधिकारिणि कल्प्येत . देवाधिकारिविशेषणतामापन्नं फलं भविष्यति । ननु वर्णतादि(व्यञ्जना)फलेष्विव फलश्रुतिरर्थवादो भविष्यति । मैवम् । तेषां क्रतुप्रकरणे समाम्नानात् । क्रत्वर्थत्वावगमे सति अधिकारकल्पनाया अन...शत्वाद्युक्ता फलश्रुतेरर्थवादता । अध्ययनस्य तु न प्र....म्नानमित्यपरार्थतैव ।

ननु साक्षाद्दृष्टार्थावबोधोप.....ध्ययनमक्षरसंस्कारार्थमेवेति परार्थत्वमस्त्येव । मन्दमै........नविधेरानर्थक्यप्रसङ्गात् विनापि विधिना तत्र प्रवृत्तिसिद्धेः...............परार्थतयाक्षरसंस्कारार्थेध्ययने प्रवृत्त्यनुपपत्तिरित्याशङ्क्याह यदपि चेति । अयमभिप्रायः । अध्यापनविधिप्रयुक्त्यैव लब्धानुष्ठाने अध्ययनविधावधिकारिणोनपेक्षितत्वात् तत्कल्पनायामसत्यां

फलश्रुतेरर्थवादतैवेति । ननु सिद्धान्तेऽप्यर्थावबोधार्थत्वे किमिति विधानानर्थक्यं न भवति? नियोगसिद्धेरन्यतोऽनवगतायाः प्रतिपादकत्वात् । तदुक्तम्—"नियोगसिद्धेः किमन्यत् प्रयोजनं सर्वविधीनाम्?" इति । संस्कारकर्मपक्षे तु न नियोगविषयता संभवतीति तृतीये दर्शितम् । ननु नियोगसिद्धौ विवक्षितायां कस्मादर्थावबोधोऽप्यपरं फलमुच्यते? सर्वविधीनां पुरुषार्थसंस्कारपर्यवसायित्वात् । नित्यविधयोऽप्यैश्वर्यपर्यन्ताधिकारपर्यवसायिनः । अवघातादिविधयश्च क्रत्वधिकारपर्यन्ताः । न चाध्ययनविधावधिकाराकल्पने तात्पर्यपर्यवसायिता भवति । ननु चाध्यापनाधिकारनिष्पत्तिप्रयोजनतयैव किं पुरुषार्थपर्यवसायिता नाश्रीयते? सकलस्य वेदस्याविवक्षितार्थत्वप्रसङ्गादध्यापनाधिकारस्याप्यसंभवात्; अध्यापनविधिप्रयुक्त्या चाधीतवेदादर्थावगमः, तदनन्तरमधिकारावगमोऽपीष्यत एव । अत एव वेदार्थजिज्ञासयैव मीमांसाश्रवणे प्रवृत्तिः । सोऽयं वेदाध्ययनमीमांसाश्रवणयोर्मध्येऽधिकार इति मीमांसकप्रसिद्धिः ।

मीमांसाभाष्यपरिशिष्टमातृका

फलश्रुतेरर्थवादतैवेति ।

ननु सिद्धान्तेपि अर्थावबोधार्थत्वे किमिति विधानानर्थक्यं न भवति । नियोगसिद्धेरन्यतोनवगतायाः प्रतिपादकत्वात् तदुक्तम् । नियोगसिद्धेः किमन्यत् प्रयोजनं सर्वविधीनामिति । संस्कारकर्मपक्षे तु न नियोगविषयता संभवतीति तृतीये दर्शितम् ।

ननु नियोगसिद्धौ विवक्षितायां कस्मादर्थावबोधोप्यपरं फलमुच्यते सर्वविधीनां पुरषार्थसंस्कारपर्यवसायित्वान्नित्यविधयोप्यैश्वर्यपर्यन्ताधिकारपर्यवसायिनः अ........विधयश्च क्रत्वधिकारपर्यन्ताः न चाध्ययनविधावधिका....ननु चाध्यापनधिकारनिष्पत्तिप्रयोजनतयैव किं........पर्यवसायिता नाश्रीयते सकलवेदस्याविवाक्षितार्थत्वप्रसङ्ग...धिकारस्याप्यसंभवात् अध्यापनविधिप्रयुक्त्या चाधीतवेदार्था....ते तदनन्तरमधिकारावगमोपीष्यत एव अत एव च वेदार्थ...सयैव मीमांसाश्रवणे प्रवृत्तिः सेयं वेदाध्ययनमीमांसाश्रवणयोर्मध्येधिकार इतिमीमांसकप्रसिद्धिः

शेषलक्षणेन व्याख्यातमिति * शेषश्च तल्लक्षणश्चेति सपरिकरचोदना- १८—२
सूत्रव्यतिरिक्तं शास्त्रमभिहितम् । धर्मजिज्ञासाप्रकरणमिति* धर्मजिज्ञा- १८—७
सया प्रक्रियते यत् तत् धर्मजिज्ञासाप्रकरणं शास्त्रम् ॥

## चोदनालक्षणोऽर्थो धर्मः १--१--२                    २०—१

अथातो धर्मजिज्ञासेत्यनेन शास्त्रारम्भणीयतां समर्थ्येदानीं शास्त्र-
मभिधीयते मीमांस्यते—"चोदनालक्षणोऽर्थो धर्मः" इति । आचार्य- २०—३
चोदितः करोमि—इति हि दृश्यत इति* अविवक्षितप्रत्ययार्थस्य
णिजन्तस्य धातोरर्थस्य दर्शनम् । नान्यत् किञ्चनेन्द्रियमिति* इन्द्रिय- २३—१
ग्रहणं शब्दातिरिक्तप्रमाणप्रदर्शनार्थम् ।

नन्वतथा इत्यादिभाष्यम् * इदं केचित् प्रमाणत्वाप्रमाणत्वे २३—२
सर्वविज्ञानानां स्वत एवेति, तथा द्वे अपि परत एवेति, तथा अप्रामाण्यं
स्वतः प्रामण्यं परत इति पक्षानाश्रित्य वर्णयन्ति । तत्र कथं तदुभयं
स्वत एवेति मन्यते ? उच्यते—

प्रमाणस्य भावः कर्म वा प्रामाण्यम् । यस्मिंश्च सति 'प्रमाणम्' इति

मीमांसाभाष्यपरिशिष्टमातृका

शेषलक्षणेन व्याख्यातमिति शेषश्च तल्लक्षणश्चेति सपरिकरचोदनासूत्रव्यतिरिक्तं
शास्त्रमभिहितं धर्मजिज्ञासाप्रकरणमिति धर्मजिज्ञासया प्रक्रियते यत्तद्धर्मजिज्ञासा-
प्रकरणं शास्त्रम् ॥ चोद....

अथातो धर्मजिज्ञासेत्यनेन शास्त्रारम्भणीयतां समर्थ्येदानीं शास्त्रमभि-
धीयते मीमांसयते चोदनालक्षणोर्थो धर्म इति आचार्यचोदितः करोमीति हि
दृश्यत इत्यविवक्षितप्रत्ययार्थस्य णिजन्तस्य धात्वर्थस्य दर्शनं नान्यत्
किञ्चनेन्द्रियमिति इन्द्रिग्रहणं शब्दातिरिक्तप्रमाणप्रदर्शनार्थम् नन्वतथेत्यादि-
भाष्यमिदं केचित्प्रमाणाप्रमाणत्वे सर्वविज्ञानानां स्वत एवेति तथा द्वे अपि एवे.
तथाप्रामाण्यं स्वतःप्रामाण्यं परत इति पक्षानाश्रित्य वर्णयन्ति.......भयं
स्वत एवेति मन्यन्ते. उच्यते प्रमाणस्य भावः क....ण्यं यस्मिंश्च सति प्रमाणमिति

बुद्धिः शब्दश्च प्रवर्तते, स प्रमाणस्य भावः । प्रमाणस्य स्थित-निश्चायकत्वे सति तयोः प्रवृत्तिरिति तदेव प्रामाण्यम् । कार्यं च यथा-वस्थितनिश्चयलक्षणं तत्प्रतिबद्धव्यवहारलक्षणं च । तत्र कार्यलक्षणं प्रामाण्यं सर्वज्ञानानां स्वत एवेति स्वरूपादेव विज्ञानान्तरनिरपेक्षादित्यर्थः । तथा हि—घटादिविज्ञानानि घटादिनिश्चये न ज्ञानान्तरमपेक्षन्ते तथा तत्प्रतिबद्धव्यवहारप्रवृत्तावपीति स्वत एव प्रामाण्यम् । अप्रामाण्यमप्यय-थावस्थितार्थनिश्चयलक्षणं तत्प्रतिबद्धव्यवहारप्रवृत्तिलक्षणं च । न शुक्तिकां रजतत्वेन निश्चेतुं शुक्तिरजतज्ञानं ज्ञानान्तरापेक्षं तथा तद्व्यवहारं वा प्रवर्तयितुमिति । यदा चोभयं स्वतः, तदान्यानपेक्षत्वे न ज्ञायते—किमत्रेति । ततश्च सन्देहो जायते । तेन चोदनाया अपि तथा ; तथात्वे संशयः ; सति च तस्मिन् प्रामाण्यमप्रामाण्यं वेति विनि-गमासंभवात् पशुपनिखातपृथ्वीमध्योपलक्षणकीलकनिर्देशवदुभयं परत एवेत्येतदेव मन्यते । यदा प्रामाण्यमप्रामाण्यं चान्यनिरपेक्षं न भवति, किं केति निरूपयितुं तदावश्यं ज्ञानान्तरमपेक्षणीयं भवति । व्युत्पन्नेऽपि ज्ञानेऽर्थनिश्चये सत्यपि संशयोऽयमवकल्पते—किं

मीमांसाभाष्यपरिशिष्टमातृका.

सिद्धिः शब्दश्च प्रवर्तते स प्रमाणस्य........स्थितनिश्चायकत्वे सति तयोः प्रवृत्तिरिति तदेव प्रामाण्यं का.......वस्थितिलक्षणं तत्प्रतिबन्धव्यवहारलक्षणं च त....कार्यलक्षणं प्रामाण्यं सर्वज्ञानां स्वत एवेति स्वरूपादेव विज्ञानान्तर-निरपेक्षादित्यर्थः तथा हि घटादिविज्ञानानि घटादिनिश्चयेन ज्ञानान्तरमपेक्षन्ते तथा तत्प्रतिबद्धव्यवहारप्रवृत्तावपीति स्वत एव प्रामाण्यम्. अप्रामाण्यमप्ययथावस्थितार्थ-निश्चयलक्षणं तत्प्रतिबद्धव्यवहारप्रवृत्तिलक्षणं च न शुक्तिकां रजतत्वेन निश्चेतुं शुक्तितरजतज्ञानं ज्ञानान्तरापेक्षम्. तथा तद्यवहारं वा प्रवर्तयितुमिति. यदा चोभयं स्वतस्तदान्यानपेक्षत्वेन जायते. किमत्रेति ततश्च सन्देहो जायते तेन चोदनाया अपि तथा तथात्वे संशयः सति च तस्मिन्नप्रामाण्यवेपि निगमासं-भवात् पाशुपनिखातनिखातपृथ्वीमध्योपलक्षणकीलकनिर्देशवदुभयं परत एवेत्यतदेव मन्यते. यदा प्रामाण्यमप्रामाण्यं चान्यनिर....किं केति निरूपयितुं तदाव-श्यं ज्ञानान्तरमपेक्ष......:व्युत्पन्नेपि ज्ञानेर्थनिश्चये सत्यपि संशयोयमव.....किं

तथाभूतेऽर्थे निश्चयः, उतातथाभूत इति । अस्मिन् संशयेऽर्थस्यापि तथात्व-मतथात्वं वा निश्चेतुं न शक्यत इति तन्निश्चयाय हेत्वन्तरमुपासनीयम् । यादृशसामग्रीजनितज्ञानग्राह्यं वस्तु तथाभूतमतथाभूतं वोपलब्धं तादृशसामग्रीजन्यमेव तदपीति सामग्रीज्ञाने जाते तथाभूततातथाभूततावा-र्थस्य निश्चीयते । या च प्रमाणसामग्री सा गुणपदावेदनीया, या चाप्रमाण-सामग्री सापि दोष इति गुणज्ञानात् प्रामाण्यं दोषज्ञानाच्चाप्रामाण्यमिति द्वयमपि परतः । एवमपि चोदनाया न प्रामाण्यम्, गुणाभावात् । प्रमाणान्तरपूर्वकप्रत्ययितवचनतालक्षणो महान् शब्दगुणो लोके प्रतीतः; न च चोदनायां सोऽस्ति । न चाप्रामाण्यमपि, दोषाभात्; अप्रत्ययितवचनता हि दोषत्वेन संमता मूलप्रमाणशून्यपुरुषवचनता च । न च प्रामाण्या-प्रामाण्योभयरहितं वस्त्वस्तीति पुनरपि सन्देहादप्रामाण्यम् । तथा परतः प्रमाण्यमप्रामाण्यं स्वत इत्येवमुपपादनीयम् । यदा तु ज्ञानं स्वतः सन्देह-ग्रस्तम्, तदा स्वत एवाप्रमाणम्; संशयस्याप्रमाणत्वात् । परतश्च तथाभाव-

मीमांसाभाष्यपरिशिष्टमातृका.

तथाभूतेर्थे निश्चयः कृतातथाभूत इत्यस्मिन् संशयै....पि तथात्वमतथात्वं वा निश्चेतुं न शक्यत इति तन्निश्चया ...रमुपासनीयम्. यादृशसामग्रीजनितज्ञानग्राह्यं वस्तु तथा.....तथाभूतं वोपलब्धं तादृशसामग्रीजन्यमेव तदपीति सामग्रीज्ञाने जाते तथाभूतता वार्थस्य निश्चीयते या च प्रमाणसामग्री सा गुणवपदावेदनीया चाप्रमाणसामग्री सापि दोष इति गुणज्ञानात्प्रामाण्यं दोषज्ञानाच्चाप्रामाण्यमिति द्वयमपि परतः. एवमपि चोदनाया न प्रामाण्यं गुणभावात् प्रमाणान्तरपूर्वक-प्रत्ययितवचनतालक्षणो महाञ्छब्दगुणो लोके प्रतीतः.

न च चोदनायां सोस्ति. न चाप्रामाण्यमपि. दोषाभावादप्रत्ययितवचनता हि दोषत्वेन सम्मता मूलप्रमाणशून्यपुरुषवचनतां च प्रामाण्याप्रामाण्यो-भयरहितं वस्त्वस्तीति पुनरपि सन्देहादप्रामाण्यम्. तथा परतः प्रामाण्य-मप्रामाण्यं च स्वत इत्येवमुपपादनीयम्. य.....ज्ञानं स्वतस्सन्देहग्रस्तं तदा स्वत एवाप्रामाणं संशयस्या........त्वात् परतश्च तथाभाव-

निश्चय इति परतः प्रामाण्यम् । प्रामाण्यकारणाभावात् स्वतश्चाप्रमाणं चोदनेति ।

एवमेव स्वतः सर्वज्ञानानां प्रामाण्यम्, अप्रामाण्यं तु परत एवेत्याश्रित्य प्रत्यवस्थेयम् । तथा हि–विज्ञानं जायमानं यथाभूतार्थमवभासयति, तथाभूत एवार्थ इति निश्चाययत्येवेति न तु निश्चये ज्ञानान्तरमपेक्षणीयम्; तेन स्वत एव प्रामाण्यम् । अप्रामाण्यं तु अर्थस्यातथाभावनिश्चयनिरपेक्षं सन्नावगमयितुमलमिति परतोऽप्रामाण्यम् । अपि च प्रमाणाप्रमाणसाधारणत्वे निश्चयस्य निश्चयानुसारेण पश्चादाशङ्कोपजायते ; सा परत एवेति परत एवाप्रामाण्यम् । न चापि सर्वत्राशङ्का; किन्तु यादृशे व्यभिचारदर्शनम्, तादृश एव शङ्का । न च सर्वावस्थे ज्ञाने व्यभिचारदर्शनमिति सर्वत्राशङ्का ; सर्वत्रैवाशङ्कायां परतोऽपि प्रामाण्यं न स्यात्, तस्यापि शङ्कास्पदत्वादिति ।

२६–१ एवं प्रत्यवस्थाय विप्रतिषिद्धमिदम् * इत्यादिभाष्यमेवं योजनीयम्— यदि ज्ञानानुत्पत्तिरूपमप्रामाण्यमभिप्रेत्य "नन्वतथाभूतम्" इत्युच्यते तदा "ब्रवीति–इति, वितथं च—इति विप्रतिषिद्धम्" इति । अथ सन्देहरूपम्, तदसिद्धम्, निश्चयरूपप्रत्ययोत्पत्तेः । यदा विपर्ययरूपम्, तदा तस्य

मीमांसाभाष्यपरिशिष्टमातृका

निश्चय इति परतः प्रा....प्रामाण्यकारणाभावात् स्वतश्चाप्रमाणं चोदनेति एव ....तस्सर्वज्ञानानां प्रामाण्यमप्रामाण्यं तु परत एवेत्याश्रित्य प्र...स्थेयं. तथा हि विज्ञानं जायमानं यथाभूतार्थमवभासाय...तथाभूत एवार्थ इति निश्चाययत्येवेति न तु निश्चये ज्ञानान्तरमपेक्षणीयं तेन स्वत एव प्रामाण्यम् अप्रामाण्यं त्वर्थस्यातथाभावनिश्चयनिरपेक्षं सन्नावगमयितुमलमिति परतो प्रामाण्यम्. अपि च प्रमाणाप्रमाणसाधारणत्वे निश्चयस्य निश्चायानुसारेण पश्चादाशङ्कोपजायते सा परत एवेति परत एवाप्रामाण्यम्. न चापि सर्वत्राशङ्का किन्तु यादृशे व्यभिचारदर्शनं तादृश एव शङ्का. न च सर्वावस्थे ज्ञाने व्यभिचारदर्शनमिति सर्वत्राशङ्का सर्वत्रैवाशङ्कायां परतोपि प्रामाण्यं न स्यात् तस्यापि शङ्कास्पदत्वादिति एवं प्रत्यवस्थाय विप्रतिषिद्धमिदमित्यादि भाष्यमेवं योजनीयम्. यदि ज्ञानानुत्पत्तिरूपमप्रामाण्यमभिप्रेत्य.

नन्वतथाभूतमित्युच्यते तथा ब्रवीतीति वितथं चेति विप्रतिषिद्धम्. अथ..देहरूपं तदसिद्धम् निश्चयरूपप्रत्ययोत्पत्ते......पर्यायरूपं तदा तस्य

बाधकारणदोषायत्तत्वात् परत इति ।

एतदनुपपन्नम्, वृत्तिकारग्रन्थे प्रत्यक्षादिविज्ञानानां परतस्त्वप्रतिषेधात्; उत्तरभाष्यमपि वक्तव्योपेक्षणात् अवक्तव्याभिधानादसंबद्धार्थमित्यर्थासंस्पर्शिशाब्दज्ञानाभिप्रायेणैव पूर्वपक्षभाष्यं व्याख्येयम् ।

तच्चेत् प्रत्ययितात् पुरुषात्, इन्द्रियविषयं वेति * प्रत्ययो यस्य विवक्षितार्थविषयो जातः, स प्रत्ययित उच्यते । तस्य सर्वं वचनं सत्यम्, सर्वप्रत्ययानां यथार्थत्वात् । अत "इन्द्रियविषयं वा" इति जात्यन्तरम् । यथा चक्षुषा रूपमुपलभ्यत इति * चक्षुषि सति रूपोपलब्धेर्दर्शनात् असति चानुपलब्धेश्च 'चक्षुषा रूपमुपलभ्यते' इति यथावगम्यते, तथा चोदने सत्युपदेशदर्शनादसति चादर्शनात् 'चोदनादुपदेशः' इत्यवगम्यते ॥  २६-१२ / २८—५

## तस्य निमित्तपरीष्टिः १—१—३  ४२--१

"अथातो धर्मजिज्ञासा" इत्यनेन शास्त्रस्यारम्भणीयत्वं साधितम्; चोदनासूत्रेण तु कार्येऽर्थे वेदस्य प्रामाण्यमिति प्रतिपादितम्;

मीमांसाभाष्यपरिशिष्टमातृका

बाधकारणादोषाय त्तत्वा......तदनुपपन्नम् वृत्तिकारग्रन्थे प्रत्यक्षादिविज्ञानानां.... षेधात् उत्तरभाष्यमपि वक्तव्योपेक्षणादवक्तव्याभि.....बद्धार्थमित्यर्थासंस्पर्शिशब्दज्ञानाभिप्रायेणैव पूर्वप....ष्यं व्याख्येयम् तच्चेत् प्रत्ययितात्पुरुषादिन्द्रियविषयं वेति प्रत्ययो तस्य सर्वं वचनं सत्यम्. सर्वप्रत्ययानां यथार्थत्वात्. अत इन्द्रियविषयं वेति जात्यन्तरम्. यथा चक्षुषा रूपमुपलभ्यत इति चक्षुषि सति रूपोपलब्धिदर्शनादसति चानुपलब्धेश्च चक्षुषा रूपमुपलभ्यत इति यथावगम्यते तथा चोदने सति उपदेशादर्शनादसति चादर्शनाच्चोदनादुपदेश इत्यवगम्यते. तस्य—अथातो धर्मजिज्ञासेत्यनेन शास्त्रस्यारम्भणीयत्वं साधितम्. चोदनासूत्रेण तु कार्येर्थे वेदस्य प्रामाण्यमिति प्रतिपादितम्

परीष्टिसूत्रेण तु साधिते प्रामाण्यसहितवेदार्थे तस्य निमित्तं परीक्ष्यते इति सूत्रत्रयस्यार्थः ॥

४३–१ सत्संप्रयोगे........ १---१---४

४४--१ सतीन्द्रियार्थसम्बन्ध इति * इन्द्रियाणि=चक्षुस्त्वग्रसनघ्राण-श्रोत्रमनांसि । तत्र तैजसाश्चक्षुषो रश्मयोऽधिष्ठानाद्बहिर्गताः पृथ्वग्राः सन्तता द्रव्येण संयुज्यन्ते ; सोऽयं संयोगलक्षण इन्द्रियार्थसंनिकर्षः । रूपादिभिश्च तद्गतैः संयुक्तसमवायलक्षणः । त्वचो वायुना सह संयोगः; तद्गतैश्च स्पर्शादिभिः संयुक्तसमवायः । रसनस्य च रसनीयद्रव्यसमवेतेन रसेन संयुक्तसमवायः । तथा घ्राणस्य गन्धेन । श्रोत्रस्य शब्देन समवाय-लक्षणः । मनसः सुखादिभिः संयुक्तसमवाय एवेति ॥

४६–१ औत्पत्तिकस्तु........१—१—५

४६--४ औत्पत्तिक इति नित्यं ब्रूमः इति * नित्यग्रहणमपौरुषेयत्वोपलक्षणम्, शब्दार्थसम्बन्धस्य क्रियागर्भत्वेनानित्यत्वेनाभ्युपगमात् । ननु शब्दार्थयो-

मीमांसाभाष्यपरिशिष्टमातृका

परीष्टिसूत्रेण तु साधिते प्रामाण्यसहितवेदार्थस्य निमित्तं परीक्ष्यत इति सूत्रत्रयस्यार्थः.

सत्संप्रयोगे. सतीन्द्रियार्थसंबन्ध इति इन्द्रियाणि चक्षुस्त्वग्रसनघ्राणश्रोत्रमनांसि. तत्र तैजसाश्चक्षुषो रश्मयोऽधिष्ठानाद्बहिर्गताः पृथ्वग्रास्सन्तता...व्यण संयुज्यन्ते. सोयं संयोगलक्षण इन्द्रियार्थस......दिभिश्च तद्गतैस्संयुक्तसमवायलक्षणात्वच .........ह संयोयः तद्गतैश्च स्पर्शादिभिस्संयुक्तसमवायः रसनस्य च रसनीय-द्रव्यसमवेतेन रसेन संयुक्तसमवायः तथा घ्राणस्य गन्धेन श्रोत्रस्य शब्देन समवाय-लक्षणः मनसस्सुखादिभिस्संयुक्तसमवाय एवेति.

औत्पत्तिकस्तु—. औत्पत्तिक इति नित्यं ब्रूम इति नित्यग्रहणमपौरुषेयत्वो-पलक्षणं शब्दार्थसंबन्धस्य क्रियागर्भत्वेनानित्यत्वेनाभ्युपगमात्. ननु शब्दार्थयो....

रुत्पत्तौ सम्बन्धो भवतीत्यौत्पत्तिक उच्यते ; न च शब्दानामुत्पत्तिरस्ति; अर्थानामप्याकृतिरूपाणामुत्पत्तिर्नेष्यत इत्याशङ्क्याह—उत्पत्तिरिति भाव उच्यते लक्षणया इति * उत्पत्त्यनन्तरा हि भावानां मेयतेति लक्षणयोत्पत्ति-४६--४ शब्देन सत्तोच्यते । भवार्थतद्धितोऽत्र ठञेव विधीयते । तथा च तत्र "तत्र भवः" इत्यनुवृत्तिः । सत्ता च भवत्यर्थो गृह्यते ; नोत्पत्तिः, "तत्र जातः" इत्यनेनैव गतत्वात् । तेन शब्दार्थसत्तायां सम्बन्धसत्तेत्यर्थः । तदाह—अवियुक्तः शब्दार्थयोर्भावः सम्बन्धेन, नोत्पन्नयोः पश्चात् पुरुषकृतः ४६--५ सम्बन्ध इति * किमौत्पत्तिकसम्बन्धे प्रमाणम् ? उत्तरम्—उपदेशो हि भवति इति * उपदेशशब्दं व्याचष्टे—'उपदेशः' इति विशिष्टस्य ४६--८ शब्दस्योच्चारणमिति * अलौकिककार्याभिधायकतया च वैदिकशब्दानां ४६--८ विशिष्टता, शब्दान्तराणां प्रमाणान्तरप्रतीतार्थविषयत्वात् । अव्यतिरेकश्च * ४६--९ --अव्यभिचारश्च ज्ञानस्य ; न हि तदुत्पन्नं ज्ञानं कदापि विपर्येति ; यच्च नाम ज्ञानमुत्पन्नं न विपर्येति, न तच्छक्यते वक्तुम्--नैतदेवम्-इति । एवमेतन्न भवति इति=ज्ञानमिदं विज्ञायते न ज्ञानं न भवति इति । बादरायणस्येदं मतम्—इति यत् कीर्त्यते, तद्बादरायणं पूजयितुम् ;४६-१६ नात्मीयं मतं पर्युदसितुम् *

मीमांसाभाष्यपरिशिष्टमातृका

पत्तौ संबन्धो भवति इत्यौत्पत्तिक उच्यते. न च शब्दा......रस्ति अर्थानामप्या-कृतिरूपाणामुत्पत्तिर्नेष्यत इत्या......त्पत्तिरिति भाव उच्यते लक्षणयोत्पत्त्यनन्तरा हि भावा......लक्षणयोत्पत्तिशब्देन सत्तोच्यते. भावार्थतद्धितो......मेव विधीयते तथा च तत्र भव इत्यनुवृत्तिः सत्ता च भवत्य....ह्यते नोत्पत्तिः तत्र जात इत्यनेनैव गतत्वात्. तेन शब्दार्थसत्तायां संबन्धसत्तेत्यर्थः. तदाह—अवियुक्तः शब्दार्थयोर्भावः संबन्धेन नोत्पन्नयोः पश्चात्पुरुषकृतः संबन्धः किमौत्पत्तिकसंबन्धे प्रमाणमुत्तरमुपदेशो हि भवति. उपदेशशब्दं व्याचष्टे उपदेश इति. विशिष्टस्य शब्दस्योच्चारणमलौकिककार्याभिधायकतया च......नां विशिष्टताशब्दान्तराणां प्रमाणान्तरप्रतीतार्थविष....व्यतिरेकश्च अव्यभिचारश्च ज्ञानस्य. न हि तदुत्पन्नं ज्ञानं......युति यच्च नामज्ञानमुत्पन्नं न विपर्येति न तच्छक्यते वक्तु.... न्नैतदेवमिति- एवं मतं न भवतीति ज्ञानमिदं विज्ञायते न ज्ञानं न भवतीति. बादरायणस्येदं मतमिति यत्कीर्त्यते तं बादरायणं पूजयितुं नात्मीयं मतं पर्युदसितुम् ।

४६-१८ वृत्तिकारस्तु * अत्र वृत्तिकारमतेन नञध्याहारेण तस्य निमित्तपरीष्टिरिति सूत्रं व्याख्यातम्। भाष्यकारेण विनाध्याहारेण। विकल्पमात्रतानिराकरणाय निमित्तं परीक्षितव्यमेव। तत्र जात्यादिप्रत्ययो विकल्पमात्रम्, न चेदं जात्यादिवस्तु इत्याशङ्क्येह प्रतिभासबलेन जात्यादिसद्भावः प्रतिपाद्यते।

ननु चेदं स्वांशालम्बि 'इदम्' विज्ञानम्। नैतदेवम्, बहिरवभासात्। ननु च बहिरवभासत्वेऽपि शुक्तिकायां रजतज्ञानं स्वांशालम्ब्येव। नेत्युच्यते, रजतज्ञानस्य स्मृतित्वात्। न च स्मर्यमाणं रजतं बहिर्नास्ति। यदि हीदं रजतज्ञानं प्रत्यक्षं स्यात्, स्यादर्थशून्यम्; न त्वेतत् प्रत्यक्षम्, रजतासंयुक्ते चक्षुषि भावात्; ग्राह्यार्थसंयुक्तेन्द्रियजन्यं हि ज्ञानं प्रत्यक्षम्, न तु शुक्तिकारजतज्ञानं तथा। कथं पुनरेतज्ज्ञायते 'तथाभूतमिदं न भवति' इति? बाधकप्रत्ययात्। यत्र तर्हि बाधकप्रत्ययो नास्ति, सत्संप्रयोगजत्वात्तत् प्रत्यक्षं प्राप्तम्। एतदपि नास्ति, कारणदोषज्ञानादतत्संप्रयोगजत्वावगमात्। अत्रापि भेदावगमादस्य स्मृतित्वात्। तस्याश्च बाह्यालम्बनत्वात् जात्यादिप्रतीतिवशेन जात्यादिबाह्यवस्तुसिद्धेर्न

मीमांसाभाष्यपरिशिष्टमातृका

वृत्तिकारस्तु—अत्र वृत्तिकारमतेन नञध्याहारेण तस्य निमिप्रपरीष्टिति सूत्रं व्याख्यातम् भाष्यकारेण विनाध्याहारेण विकल्पमात्रतानिराकरणाय निमित्तं परीतव्यमेव तत्र जात्यादिप्रत्ययो विकल्पमात्रम् न चेदं जात्ययादिवस्त्वित्याशङ्क्याह: प्रतिभासबलेन जात्यादिसद्भावः प्रतिपाद्यते ननु चेदं स्वांशालम्बीद विज्ञानम् नैतदेवम् बहिरवभासात्.

ननु बहिवासत्वेपि शुक्तिकायां रजतज्ञानं स्वांशालंब्येव नेत्युच्यते... ज्ञानस्य स्मृतित्वात् न च स्मर्यमाणं रजतं बहिर्नास्ति यदि ही.....ज्ञानं प्रत्यक्षं स्यात् स्यादर्थशून्यं न त्वेतत्प्रत्यक्ष..........क्ते चक्षुषि भावात् ग्राह्यार्थसंयुक्तेन्द्रियजन्यं हि ज्ञान......नु शुक्तिकारजतज्ञानं तथा कथं पुनरेतज्ज्ञायते तथाभूत.............. भवतीति बाधकप्रत्ययात् यत्र तर्हि बाधकप्रत्ययो नास्ति स.......... संप्रयोगजत्वात् तत्प्रत्यक्षं प्राप्तं एतदपि नास्ति कारणदोषज्ञानादतत्संप्रयोगजत्वावगमात् अत्रापि भेदावगमादस्य स्मृतित्वात् तस्याश्च बाह्यालंबनत्वाजात्यादिप्रतीतिवशेन जात्यादिबाह्यवस्तु सिद्धेर्न

जात्यादिप्रत्ययो मिथ्या; किन्तु यत्रैव बाधकप्रत्ययः कारणदोषज्ञानं वा, तस्यैव स्मृतिरूपस्यापि प्रत्यक्षव्यवहारप्रवर्तकतया मिथ्यात्वम् ; न तु तदर्थशून्यतात्मकं मिथ्यात्वमस्तीति । ननु च सर्व एव * ६८–१
उच्यते—स्तम्भः—इति जाग्रतो बुद्धिः सुपरिनिश्चिता ; कथं विपर्य- ६८–४
सिष्यति ? इति * बुद्धिर्निश्चिता, कथमबुद्धिर्भविष्यति ? इत्यर्थः । अबुद्धित्वे ह्यर्थाभावः स्यात् ; बुद्धिस्तु स्वयमेव बहिरवभासिनी बाह्यार्थ-मवस्थापयन्ती सञ्जायत इति । स्वप्नेऽप्येवमेव सुपरिनिश्चितासीद्बुद्धिः ६८–६
प्राक् प्रबोधात् ; न तत्र कश्चिद्विशेषः * परिहरति—न जाग्रत्स्वप्नयो-रविशेषः । कस्मादित्यत्राह—विपर्ययदर्शनात् स्वप्ने, अविपर्ययाच्चे- ६९–१
तरस्मिन् * पुनराशङ्कते—तत्सामान्यादितरत्र विपर्ययो भविष्यतीति चेत् ६९–२
इति * दूषयति—यदि प्रत्ययत्वात् स्वप्नप्रत्ययस्य मिथ्याभावः, जाग्रत्प्रत्य- ६९–३
यस्यापि भवितुमर्हति इति * अस्यार्थः—यदि प्रतीतिरेवातथाभावं गमयति, जाग्रत्प्रतीतिरप्यर्थस्यातथाभावं गमयेत् । अथ प्रतीतिस्तथा-भावस्य हेतुः, न शक्यते 'प्रत्ययादयमन्यः' इति वदितुम् ।

मीमांसाभाष्यपरिशिष्टमातृका

जात्यादिप्रत्ययो विथ्य किन्तु यत्रैव बाधकप्रत्ययः कारणदोषज्ञानं वा तस्यैव स्मृतिरूपस्यापि प्रत्यक्षव्यवहारप्रवर्तकतया मिथ्यात्वम्. न तु तदर्थशून्यतात्मकं मिथ्यात्वमस्तीति.

ननु च सर्व एव—उच्यते स्तंभ इति जाग्रतो बुद्धिस्सुपरिनिश्चिता. कथं विपर्यसिष्यतीति. बुद्धिर्निश्चिता. कथमबुद्धिर्भविष्यतीत्यर्थः. अबुद्धित्वे ह्यर्था-भावस्स्यात् बुद्धिस्तु स्वयमेव बहिरवभासिनी बाह्यार्थमवभासयन्ती सञ्जा....त इति स्वप्नेप्येवमेव सुपरिनिश्चितासीत् बद्धिः...प्रबोधान्न तत्र कश्चिद्विशेषः. परिहरति न जाग्रत्स्वप्नप्रत्य ...शषः. कस्मादित्यत्राह—विपर्ययदर्शनात् स्वप्नेपि पर्य...... च्चेतरस्मिन् पुनराशङ्कते. तत्सामान्यादितरत्र विपर्ययो भ......चेत् दूषयति. यदि प्रत्ययत्वात्स्वप्नप्रत्ययस्य मिथ्याभावजाग्रत्प्रत्य . . . विभवितुमर्हति. अस्यार्थः यदि प्रतीतिरेवातथाभावं गमयति. जाग्रत्प्रतीतिरप्यर्थस्यातथाभावं गमयेत्.

अथ प्रतीतिस्तथाभावस्य हेतुर्न शक्यते. प्रत्ययादयमन्य इति वदितुम्.

यदि प्रतीतिस्तथाभावस्य हेतुः—इत्यसंशये संशयवचनम् । कथं तर्हि
७०--२ स्वप्नप्रत्ययस्य मिथ्याभाव इत्यत्राह—अन्यतस्त्विति * स्वप्नप्रत्ययस्य
७१--१ मिथ्याभावो विपर्ययादवगतः; सोऽन्यतः । कुतोऽन्यतः ? सनिद्रस्य मनसो
दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः * निद्रालक्षणदोषात् स्मरामि—इत्यंश-
७१--१ प्रमोष इत्यर्थः । कस्यां दशायामित्याह—स्वप्नादौ स्वप्नान्ते च * न
पुनः स्वप्नमध्ये । कस्मादित्यत्राह—सुषुप्तस्य प्रत्ययाभाव एव *
७१--२ कस्मादित्याह—अचेतयन्नेव हि सुषुप्त इत्युच्यते * किं पुनस्तस्यां
७२--३ दशायां प्रमाणम् ? प्रबोध एकान्ततः स्मरणाभाव एव । ननु जाग्रतोऽपि
कारणदोषः स्यात् * ततस्तस्यापि मिथ्याभावो भवेत् । परिहरति—
यदि स्यात् कारणदोषोऽवगम्येत । पुनरप्याशङ्कते—स्वप्नदर्शनकालेऽपि
कारणदोषो नावगम्यते; अथ च कारणदोषोऽस्ति; एवं जाग्रतोऽपि कारण-
७३--३ दोषः सन्नपि नावगम्यते । एतद्दूषयति—प्रबुद्धो ह्यवगच्छति 'निद्रा-
क्रान्तं मे मन आसीत्' इति * तेन स्वप्ने दोषावगमाद्दोषोऽस्ति; जाग्रद्दशा-
वर्तिनस्तु दोषज्ञानं न कदाचिदस्तीति दोषो नास्तीति ॥

मीमांसाभाष्यपरिशिष्टमातृका

यदि प्रतीतिस्तथाभवास्य हेतुरित्यसंशये संशयवचनम्. कथं तर्हि स्वप्नप्रत्ययस्य मिथ्याभाव इति तत्राह अन्यतस्त्विति. स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः. सोन्यतः. कुतोन्यतस्सनिद्रस्य मनसो दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुः निद्रा-लक्षणदोषात् स्मरामीत्यंशप्रमोष इत्यर्थः. कस्यां दशायामित्याह स्वप्नादौ स्वप्नान्ते च. न पुनरस्वप्नमध्ये. कस्मादित्यत्राह. सुषुप्तस्य प्रत्ययाभाव एव. कस्मादित्याह अचेतयन्नेव हि सुषुप्त इत्युच्यते. किं पुनस्तस्यां दशायां प्रमाणं प्रबोध एकान्ततः स्मरणाभाव एव.

ननु जाग्रतोपि कारणदोषः स्यात् ततस्तस्यापि मिथ्याभावो भ. . त्. परिहरति यदि स्यात्कारणदोषोवगम्येत. पुनरप्याश. . . . स्वप्नदर्शनकालेपि कारणदोषो नावगम्यते. अथ च . . . दोषोस्ति एव जाग्रतोपि कारणदोषस्सन्नपि दावगम्ये.······षयति प्रबुद्धोवगच्छति निद्राक्रान्तं मे मन आसीदिति. ते स्वप्ने दा·······मादोषोस्ति जाग्रद्दशावर्तिनस्तु दोषज्ञानं कदाचिदस्तीति . . . .

शून्यस्तु * स हि बहिर्देशसंबद्धः प्रत्यक्षम् * इति भाष्यमनुपपन्नमिति मन्यन्ते । व्यतिरिक्तप्रतिभासेन बहिरर्थसिद्धिरनेन भाष्येणोच्यते; न चैतदुपपन्नम् । व्यतिरिक्तप्रतिभासो हि ज्ञानापेक्षया वा, संविदपेक्षया वा, आत्मापेक्षया वा ? न तावज्ज्ञानापेक्षया व्यतिरिक्तप्रतिभासो घटते, ज्ञानस्यानुमेयत्वात्, अर्थेन सह संवेदनाभावात्, द्वितीयग्रहापेक्षत्वाच्च व्यतिरिक्तत्वस्य । नापि संविदपेक्षया, ज्ञानातिरिक्तसंवेदनानुपपत्तेः । न चात्मापेक्षया, नीलादिसंवेदनसमये आत्मनोऽप्रतिभासात् । अपि च, साकारज्ञानवादिनोऽपि नीलाद्याकारज्ञानभेदापत्तावपि न किञ्चिद्धीयते इति नेदमुत्तरं भाष्यकरीयमुपपद्यते । अत एव वार्तिककारोऽन्यथा प्रत्यवतस्थे । स ह्येवमूचे—नैकस्य ज्ञानस्य ग्राह्यग्राकत्वमुपपद्यते, स्वात्मनिवृत्तिविरोधात् । न चात्मवत् कर्मकर्तृभावस्याप्यविरोधिता, मानाभावात्; आत्मनः 'अहम्' इति प्रत्ययो हि ज्ञानकर्तृविषयः कर्मत्वमुपपादयन् विरोधमपाकरोति; न च नीलादिज्ञानेषु तथा ; न हि 'नीलमहम्' इति प्रत्ययो जायते । तदाह—  ७४--१ ८०--२

मीमांसाभाष्यपरिशिष्टमातृका

शून्यस्तु—स हि बहिर्देशसंबन्धः प्रत्यक्षमिति भाष्यमनुपपन्नमिति म..न्ते व्यतिरिक्तभासेन बहिरर्थसिद्धिरनेन भाष्येणोच्यते न चैतदुपपन्नम्. व्यतिरिक्तप्रतिभासो हि ज्ञानापेक्षया वा आत्मापेक्षया वा न तावज्ज्ञानापेक्षया व्यतिरिक्तप्रतिभासो घटते ज्ञानस्यानुमेयत्वादर्थेन सह संवेदनाभावात् द्वितीयग्रहापेक्षत्वाच्च व्यतिरिक्तत्वस्य नापि संविदपेक्षया ज्ञानातिरिक्तसंवेदनानुपपत्तेः ।

न चात्मापेक्षया नीलादि संवेदनसमय आत्मनोप्रतिभासात्. अपि च साकारज्ञानवादिनोपि नीलाद्याकारज्ञानभेदापत्तावपि न कञ्चिद्धीयत इति नेदमुत्तरं भाष्यकारीयमुपपद्यते. अत एव वार्तिककरोऽन्यथा प्रत्यवतस्थे. . . ह्येवमूचे नैकस्य ज्ञानस्य ग्राह्यग्राहकत्वमुपपद्यते. . .वृत्तिविरोधात्. न चात्मवत् कर्मकर्तृभावस्याप्यविरोधि. . .भावात्. आत्मनोहमिति प्रत्ययो हि ज्ञानकर्तृविषयः कर्म. . .पादयन् विरोधमपाकरोति. न च नीलादिज्ञानेषु तथा न हि. . . .महमिति प्रत्ययो जायते. तदाह—

"अङ्गुल्यग्रं यथात्मानं नात्मना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥" इति ।
तथा—"अहंप्रत्ययसंभिन्ना ज्ञानस्यैव तु कर्तरि ।
भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥" इति ।

न चेदं वार्तिककारीयमप्युत्तरं परपक्षनिराकरणसमर्थम्; न हि परे कर्मकर्तृभावं ज्ञानस्येच्छन्ति । ज्ञानं स्वरससिद्धप्रकाशं स्वसन्तानवाहि—इति मन्यन्ते । न च स्वरससिद्धप्रकाशस्य परापेक्षास्ति, येन कर्मकर्तृभावो भवेत् कर्त्रन्तरापेक्षा वा । तदुक्तं वार्तिककारेणैव—

"दीपादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ॥" इति ।

तथाप्यात्मनोऽपि यत् कर्मकर्तृभावसमाश्रयणम्, तदनुपपन्नमिति वक्ष्यते । अत्र प्रतिविधीयते—

मीमांसाभाष्यपरिशिष्टमातृका

अङ्गुल्यग्रं यथात्मान....ना स्प्रष्टुमर्हति ।
स्वांशेन ज्ञानमप्येवं नात्मानं ज्ञातुमर्हति ॥ इति ।

तथाहंप्रत्ययसंभिन्ना ज्ञानस्यैव कर्तरि भवन्तीति तत्र संवित्तिर्युज्येताप्यात्मकर्तृकेति. न चेदं वार्तिककारीयमयुत्तरं परपक्षनिराकरणसमर्थम्. न हि परे कर्मकर्तृभावं ज्ञानस्येच्छन्ति. ज्ञानं स्वरसिद्धप्रकाशं स्वसन्तानवाहीति मन्यन्ते. न च स्वरससिद्धप्रकाशस्य परापेक्षास्ति येन कर्मकर्तृभावो भवेत् कर्त्रन्तरापेक्षा वा. तदुक्तं वार्तिककारैणैव—

दीपादयो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ॥ इति ।

तथाप्यात्मनोपि यत्कर्मकर्तृभावसमाश्रयणं तदनुपपन्नमिति वक्ष्यते. अत्र प्रतिविधीयते

नीलादिसंवेदनसमये त्रयमवभासते—नीलादिकम्, तत्संवित्तिः, आत्मा चेति। ननु केयं संवित्तिर्नाम? ज्ञानफलं प्रकाशः। क्व पुनरसौ वर्तते? ज्ञातरि; न तु ज्ञेये स्मर्तुरनुमातुर्वा, अतीतानागतार्थे संवेदनानुपपत्तिप्रसङ्गात्। तर्हि ज्ञानमित्युच्यते; तद्ध्यनुमेयम्; स्वरसप्रकाशन्तु संवेदनाख्यं ज्ञानफलम्। कस्माज्ज्ञानमनुमेयमात्मनःसंयोगाख्यम्? सकलात्मविशेषगुणोत्पत्त्यसमवायिकारणकं संवेदनाख्यं ज्ञानफलं कादाचित्कं तस्य लिङ्गभूतम्। ननु अस्तु नामात्ममनःसंयोगः; मा भूत्तत् आत्मसमवायि संवेदनाख्यं ज्ञानव्यतिरेकि स्वप्रकाशम्; किन्तु व्यवहारयोग्यता नाम धर्म आत्मसमवेतो जायते; स एव च ज्ञानं संवेदनं च; अत एवानुमेयम्; व्यवहारसिद्धिश्च फलभूता तस्य लिङ्गम्। सत्यम्; व्यवहारयोग्यतैव संवेदनम्। यद्विषयं संवेदनमुपजायते, तत्रैवात्मा व्यवहारयोग्यो भवति; सा त्ववस्था आत्मनो न व्यवहारानुमेया, प्रागपि व्यवहाराद्योग्यतावभासात्; अव्यवहरमाणोऽपि वेदितारमात्मानं लोको मन्यते; पश्चात्तु

मीमांसाभाष्यपरिशिष्टमातृका

नीलादिसंवेदनसमये त्रयमवभासते नीलादिकं त................ वित्तिरात्मा चेति. ननु केयं संवि...... न फलं प्रकाशः क्व पुनरसौ वर्तते ज्ञातरि न तु ज्ञे....... र्वा. अतीतानागतार्थे संवेदनानुपपत्तिप्रसङ्गत्. तर्हि ज्ञा.... त्युच्यते. तद्ध्यनुमयेम्. स्वरसप्रकाशन्तु संवेदनाख्यं ज्ञानफलं क. .त् ज्ञानमनुमेयं अत्मनस्संयोगाख्यं सकलात्मविशेष.... णोत्पत्त्यसमवायिकारणं संवेदनाख्यं ज्ञानफलं कादाचित्कं तस्य लिङ्गभूतम्. ननु. अस्तु नामात्ममनस्संयोगः, मा भूत्तदात्मसमवायिसंवेदनाख्यं ज्ञानातिरेकि स्वप्रकाशम्. किन्तु व्यवहारगोग्यता नाम धर्म आत्मसमवेतो जायते स एव च ज्ञानं संवेदनं च. अत एवानुमेयं व्यवहारसिद्धिश्च फलभूता. तस्य लिङ्गम्. सत्यं व्यवहारयोग्यतैव संवेदनं यद्विषयं संवेदनमुपजायते तत्रैवात्मा व्यवहारयोग्या भवति. सत्ववस्थात्मनः न व्यवहारानुमेया प्रागपि व्यवहाराद्योग्यतावभासात् अव्यवहारमाणोपि वेदितारमात्मानं लोको मन्यते. पश्चात्तु

व्यवहरति स एव; तात्पर्यपर्यवसायी च प्रमाणव्यापारः; व्यवहारस्येच्छाद्वेषरूपकारणान्तरायत्तत्वेन तदेव प्रमाणफलम्, ततोऽन्यत्तत्कारणं ज्ञानरूपम्; तच्चात्ममनःसंयोगातिरेकि नापरमुपलभ्यते। अतस्तत् प्रमाणम्; योग्यता तु संवेदनं फलमिति। आत्मप्रकाशं स्वात्मप्रकाशं च विज्ञानं कस्मिंश्चिदर्थे प्रत्ययः; सर्वा हि प्रतीतिरेवमुपजायते— ममायमर्थः प्रतिभाति इति। अप्रकाशमाने चात्मनि स्वपरवेद्ये न विशिष्येयाताम्। अपि च, साकारज्ञानवादिनोऽपि त्रितयावभासं नैवावजानते। तेऽप्येवमाहुः —

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥" इति।

किन्तु भेदप्रतिभासमिममौपप्लविकमिच्छन्ति। तथा चोक्तम्—

"ज्ञानस्याभेदिनो नित्यं प्रतिभासो ह्युपप्लवः।" इति।

८०-२ तदेवं सिद्धे युगपदात्मनां प्रकाशे बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते * इति युक्त एवार्थस्य संविदो भिन्नस्य प्रति-

मीमांसाभाष्यपरिशिष्टमातृका

व्यवहरति. स एव. तात्पर्य....वसायी च प्रमाणव्यापारः व्यवहारस्येच्छाद्वेष.... रणान्तरायत्तत्वेन तदेव प्रमाणफलम्. ततान्यत्.....न रूपं तच्चात्ममनस्संयोगातिरेकि नापरमुपलभ्यते... प्रमाण योग्यता तु संवेदनं फलमिति. आत्मप्रकाशं च वि.......श्चिदर्थे प्रत्ययः सर्वा हि प्रतीतिरेवमुदयते. ममायमर्थः प्रतिभातीति अप्रकाशमाने चात्मनि स्वपरवेद्ये.... विशोष्योयाताम्. अपि च साकारज्ञानवादिनोपि त्रितयावभासं नैवावजानते. तेप्येवमाहुः—

अविभागो हि बुध्यात्मा विपर्यासितदर्शनैः।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते॥ इति।

किन्तु भेदप्रतिभासमिममौपप्लविकमिच्छन्ति. तथा चोक्तम्—

ज्ञानस्याभेदिनो नित्यं प्रतिभासो ह्युपप्लवः. इति. तदेवं सिद्धे युगपदात्मनां प्रकाशे बहिर्देशसंविद्धः प्रत्यक्षमुपलभ्यते इति युक्त एवार्थस्य संविदो भिन्नस्य प्रति-

भासोपन्यासः। नीलादिसंवेदनं मम—इति हि प्रतीतिः। तत्र संविद्भागाद्भिन्नमेव नीलम्; अन्यथा हि संविदोऽसन्नेव स्यान्नीलांशावभासः। न च 'असन्नेव नीलांशः' इति शक्यते वक्तुम्, स्वरूपत्वेन भासात्; स्वरूपवत्ता हि सत्ता, निःस्वरूपता चासत्ता; सत्ता चासत्तेति प्रतीतिविरुद्धमसत्त्वम्। न च नीलमेव संवित्, असन् भेदश्चेति किञ्चन प्रमाणमस्ति। ननु इदमस्ति प्रमाणम्—संविदोऽर्थप्रकाशात्मनः प्रकाश एवानुपपन्नः इति। तदिदं विषममापतितम्; संवित्तावन्नीलरूपा; तस्याश्च नीलत्वं स्वरूपभावभूतम्; तत्र नीलात्मनि नीलादिराकारो भेदश्च कथमवभासते? अथासतः संविदो भिन्नस्यासति प्रकाशः, तर्हि सतोऽपि किमिति न स्यात्? सतासद्भ्यः किमपराद्धम्? अतः सिद्धं संविदतिरेकी नीलादिरर्थ इति।

क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यत इति * १८--१
यासौ ग्राह्यत्वेनाभिमता बुद्धिः, सा ग्राहकाभिमतबुद्ध्यन्तरकाले नास्ति। स्वसमयवर्तिनं चाकारमुल्लिखन्ती प्रत्यक्षा बुद्धिरवभातीति न बुध्यन्तरविषयत्वं बुद्धेः। उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरं

मीमांसाभाष्यपरिशिष्टमातृका

भासोपन्यासः. नीलसंवेदनं ममेति हि प्रतीतिः. तत्र संविद्भागाद्भिन्नमेव नीलम्. अन्यथा हि संविदोसन्नेवस्य.......... लाङ्गावभासात्. न चासन्नेव नीलाश इति शक्य......क्तुम्. स्वरूपवत्वेन स्वरूपवत्ता हि सत्ता निस्वरू.....,सत्ता चासत्तेति प्रतीतिविरुद्धमसत्वम्. न चानीलमे......भेदश्चेति. किञ्चन प्रमाणमस्ति. नन्विदमस्ति प्रमाणं संवि........प्रकाशात्मनप्रकाश एवानुपपन्न इति तदिदं विषयमापति....वित्तावन्नीलरूपा तस्याश्च नीलत्वं स्वरूपभावभूतं. तत्र नाला....नीलादिराकारो भेदश्च कथमसाववभासते. अन्यथा सतस्संविदो भिन्नस्य सापि प्रकाशः तर्हि सतोपि किमिति न स्यात्. सता सद्भ्यः किमपराद्धम्. अतस्सिद्धं संविदतिरेकी नीलादिरर्थ इति. क्षणिका हि सा न बुध्यन्तरकालमवस्थास्यते इति यासौ ग्राह्यत्वेनाभिमता बुद्धिः सा ग्राहकाभिमतबुध्यन्तरकालो नास्ति स्वसमयवर्तिनं चाकारमुल्लिखन्ती प्रत्यक्षा बुद्धिरवभातीति न बुध्यन्तरविषयत्वं बुद्धेः. उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चार्थान्तरं

८५--१ प्रदीपवत् * इत्यर्थान्तरज्ञापकत्वं यदुपन्यस्तम्, तत् परस्ताद्बुद्धेः स्वयं-प्रकाशकतामभ्युपेत्य पश्चादर्थमपह्नोष्यत इत्यनेनाभिप्रायेण ॥

९०--३ * अनुमानम् ज्ञातः सम्बन्धो यस्य—इति षष्ठ्यर्थे बहुव्रीहि-समाश्रयणेनैवैकदेशो लिङ्गभूतो विशेष्यते । सम्बन्धः ज्ञापकस्यैक-देशस्य ज्ञाप्येनैकदेशान्तरेण सह वेदितव्यः । "एकदेशान्तरे"—इत्यन्तरशब्दयोगात् समानधर्मिधर्मभूतयोरेव गम्यगमकभावः । एकदेशः सम्बन्धी अभिप्रेतः; नावयवो नपि धर्मः, धूमाग्न्योरपि गम्यगमकभावा-भावप्रसङ्गात् । एतच्चानुमानस्य लक्षणम्, न पुनरुत्पत्तिसामग्रीपरिगणनम् ; ज्ञातसम्बन्धेनाप्येकदेशेन दृश्यमानेन वह्नावुष्णताधर्मयोगितया प्रतीतेऽनु-ष्णत्वानुमानोदयाभावात् प्रत्यक्षादिनिश्चिते च धर्मे पुनरनुमानानुपपत्तेः जिज्ञासितधर्मतापि धर्मिणोऽनुमानोत्पत्तौ कारणमधिकं यतः । ननु—अनुष्णो वह्निः, द्रव्यत्वात्—इति यदनुमानं नोत्पद्यते, तत्तत्रैव द्रव्यत्व-स्योष्णे दर्शनात् सम्बन्धव्याप्तिरनुमानोत्पत्तौ निमित्तम् । तन्न ;

मीमांसाभाष्यपरिशिष्टमातृका

प्रदीपवदिर्थान्तरज्ञापकत्वं यदुपन्यस्तं तत्परस्ताद्बुद्धेः स्वयंप्रकाशतामभ्युपेत्य पश्चादथमपह्नोष्यत इत्यनेनाभिप्रायेण.

अनुमानं—ज्ञातः संबन्धो यस्येति षष्ठ्यर्थे बहुव्रीहिसमासाश्रयणे-नैवैकदेशो लिङ्गभूतो विशेष्यते. संबन्धज्ञापकस्यैकदेशस्य ज्ञा...नेकदेशान्तरेण सह वेदितव्यम्. एकदेशान्तर इत्यन्त.... .योगात् समानधर्मिधर्मभूतयोरेवगम्य-गमकभावः एकदेश .....संबन्ध्यभिप्रेतो नावयवो नापि धर्मः धूमाग्न्योरपि गम्यगमकभावा................सङ्गात्. एतच्चानुमानस्य लक्षणम्. न पुनरुत्पत्तिसामग्रीगणनं ज्ञा............संबन्धेनापि एकदेशेन दृश्यमानेन वह्नावुष्णताधर्मयोगितया प्रतीतेरनुष्णत्वानुमानोदयाभावात्. प्रत्यक्षादिनिश्चिते च धर्मे पुनरनुमानानुपपत्तेः जिज्ञासितधर्मतापि धर्मिणोनुमानोत्पत्तौ कारणमधिकं यतः. नन्वनुष्णो वह्निः द्रव्यत्वादिति. यदनुमानं नोत्पद्यते तत्तत्रैव द्रव्यत्वस्य उष्णे दर्शनात् संबन्धव्याप्तिरनुमानोत्पत्तौ निमित्तम् तेना-

अनुमानोदयकाले यद्यप्यसंबद्धतापि दृश्यते, तथाप्यनुमोत्पद्यत एव। तस्माद्वैपरीत्यपरिच्छिन्ने ताद्रूप्यपरिच्छिन्ने च जिज्ञासाभावादेवानुमानुदयः। तदाह—असंनिकृष्टे इति * तत्र अनुष्णो वह्निः—इति प्रत्यक्ष-विरोधः, नास्ति द्रव्यातिरेकिणी क्रिया—इत्यनुमानविरोधः, अग्निहोत्रादीनि निष्फलत्वान्न कर्तव्यानि —इत्यागमविरोधः, न गौर्गवयसदृशः —इत्युपमानविरोधः ; अर्थापत्तिविरोधस्तु इहानुपभोग्यफलानि कर्माणि परत्रापि फलं न प्रसुवते—इति। इह लाभपूजाख्यात्यादि, परत्रापि फलं स्वर्गादि न स्यात्, फलमेव चोत्पद्यत इति। ९०–२

तत् पुनरिदमनुमानं स्वार्थं परार्थं च। तत्र स्वार्थं तत्, यत् स्वयमेव चानुमानोदयसामग्रीमनुसन्दधतोऽनुमानमुत्पद्यते ; परार्थन्तु यत् परेणानुसन्धापितसामग्रीकस्य ; अनुसन्धाप्यमानस्य हि परस्यार्थे तदनुमानं प्रवर्तते। तत्र परस्य स्वसामग्रीं कथयता वाक्यं प्रयोक्तव्यम्—पर्वतो धर्मी, वह्निमान् इति साध्यो धर्मः, यो यो धूमवान् स सोऽग्निमान् गोष्ठवत्, धूमवांश्चायं पर्वतः इति। तत्र यदि—

मीमांसाभाष्यपरिशिष्टमातृका

तेनानुमानोदयकालेयद्यप्यसंबन्धतापि दृश्यते. तथाप्यनुमोत्पद्यत एव तस्माद्वैपरीत्ये परिच्छिन्ने ताद्रूप्यपरिच्छिन्ने च जिज्ञासाभावादेवानुमानुदायः. तदाह. असन्निकृष्ट इति. तत्रानुष्णो वह्निरिति प्रत्यक्षविरोधो नास्ति. द्रव्यातिरेकिणी क्रियेत्यनुमानविरोधः अग्निहोत्रादीनि निष्फलत्वान्न कर्तव्यानीत्यागमविरोधः. न गौर्गवयसदृश इत्युपमानविरोधः. अर्थापत्तिविरोधस्तु इहानुप ..... भोग्यफलानि कर्माणि. परत्रापि फलं न प्रसुवत इति इह लाभ....दि परत्रापि फलं न स्यात् फलमेव चोत्पद्येतेति. तत्पुनरिदमनु...स्वार्थं परार्थं च. तत्र स्वार्थं तत् यत्स्वयमेव चानुमानोदयसामग्रीम...तोनुमानमुत्पद्यते परार्थन्तु परेणानुसन्धापितसामग्रीकस्यानुसन्धनाप्यमानस्य हि परस्यार्थे तदनुमानं प्रवर्तते. तत्र परस्यैस्सामग्रीं कथयता वाक्यं प्रयोक्तव्यम् पर्वतो धर्मी अग्निमानिति साध्यो धर्मः यो यो धूमवान् स सोग्निमान् गोष्ठवत् धूमवांश्चायं पर्वत इति. तत्र यदि

पर्वतो धर्मी, वह्निमानिति साध्यो धर्मः इति नोच्यते, गम्यस्यैकदेशता नोक्ता भवेत्; एकदेशताविशिष्टश्च साध्यः, न स्वतन्त्रः। तथा जिज्ञासितधर्मतापि प्रदर्शितैवं भवति; सापि चानुमानोत्पत्तावङ्गमिति प्रदर्शितम्। संबन्धव्याप्तिप्रदर्शनार्थं साध्यान्वितहेतुधर्मयोगी दृष्टान्तो दर्शयितव्यः। पक्षधर्मताप्रदर्शनाय च धूमवांश्चायम् इत्यपि वाच्यम्। एष एव क्रमः; अनुसंहितव्याप्तेर्हि पक्षधर्मदर्शनादनुमानोदय इति स्वप्रतिपत्तिसिद्धम्। कृतमतिविस्तरेण।

९०–२ तत्तु द्विविधम्—प्रत्यक्षतो दृष्टसम्बन्धम्, सामान्यतोदृष्टसम्बन्धं च* स्वरूपपरिच्छेदो हि न प्रत्यक्षादन्येन प्रमाणेन; स्वलक्षणतोदृष्टसम्बन्धं

१००-१ प्रत्यक्षतोदृष्टसम्बन्धमित्युच्यते। यथा—धूमाकृतिदर्शनादग्न्याकृति विज्ञानम् * सामान्यतोदृष्टसम्बन्धं च—देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येऽपि गतिस्मरणम् इति * ननु तव देवदत्तगतेरप्यनुमेयत्वादेतदेव वक्तुं युक्तम्—कादाचित्कमागन्तुकं कारणपूर्वकमुपलभ्य देवदत्ते देशान्तरप्राप्तिं दृष्ट्वा गत्यनुमानम् इति। सत्यमेतावतापि

मीमांसाभाष्यपरिशिष्टमातृका

पर्वतो धर्मी अग्निमानिति साध्यो धर्म इति नोच्यते. गम्यस्यैकदेशता नोक्ता भवेत् एकदेशताविशिष्टश्च साध्यो न स्वतन्त्रः. तथा जिज्ञासितधर्मतापि प्रदर्शितैवं भवति सापि चानुमानोत्पत्तौवगमिति प्रदर्शितम्. संबन्धव्याप्तिताप्रदर्शनार्थं साध्यानितहेतुधर्मयोगी दृष्टान्तो दर्शयितव्यः. पक्षधर्मताप्रदर्शनाय च धूमवांश्चायमित्यपि वाच्यम् एष एव च क्रमः अनुसंहितव्याप्तेर्हि पक्षधर्मदर्शनादनुमानोदय इति स्वप्रतिपत्तिसिद्धं. कृतमतिविस्तरेण. तत्तु द्विविधम् प्रत्यक्षतो दृष्टसंबन्धं सामान्य. दृष्टसंबन्धं च. स्वरूपपरिच्छेदो हि न प्रत्यक्षादन्य......न स्वलक्षणता दृष्टसंबन्धं प्रत्यक्षतो दृष्टसंबन्धमित्युच्य... कृतिविज्ञानादग्न्याकृतिविज्ञानं. सामान्यतो दृष्टसंबन्धं च देव...गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्यादित्येपि गतिस्मरणमिति।

ननु...देवदत्तगतेरप्यनुमेयत्वादेतदेव वक्तुं युक्तम् कादाचित्ककारणपूर्वकमुपलभ्य देवदत्ते देशान्तरप्राप्तिं दृष्ट्वा गत्यनुमानमिति. सत्यमेतावतापि

सिध्यति द्वैविध्यम्। तथापि शङ्कान्तरनिराकाणायेदमुक्तम्। क्वचिदियमाशङ्का भवति—भवतु देवदत्ते गतिपूर्विकैव देशान्तरप्राप्तिः, आदित्ये तु न इति। देवदत्तेऽपि प्रयत्नवदात्मसंयोगाद्धर्माधर्मसापेक्षाद्देशशरीरयोः संयोगविभागौ न घटते, संयोगस्य प्रत्यासन्ने एव द्रव्ये कार्यारम्भकत्वनियमदर्शनात्। प्रत्यासत्तिश्च द्विविधा—उल्लिखिता, महती च। तत्र स्वसमवायलक्षणा उल्लिखिता, महती त्वेकार्थसमवायरूपा। देशश्च नोभयविधयापि प्रत्यासत्या शरीरात्मसंयोगस्य प्रत्यासन्न इति न देशसंयोगविभागावारब्धुं शक्येते। तेन तदतिरेकिणी गतिरनुमीयताम्। आदित्ये तु गतिहेतोरेव देशान्तरप्राप्तिरस्तु—इति ये शङ्केरन्, तत्प्रतिबोधनायेदमुक्तम्—या या देशान्तरप्राप्तिः, सा सा गतिपूर्विका ; आदित्ये देशान्तरप्राप्तिरस्तीति युक्तमादित्येऽपि गत्यनुमानम्। एतच्चाभ्युपगम्यवादेनोक्तम्—यद्यप्यादित्ये गतिहेतोरेव देशान्तरप्राप्तिरुपपद्यते, तथापि गतिरेवानुमेया इति। तेन सर्वस्य देशान्तरप्राप्तेर्गतिपूर्वकत्वात् गुरुत्वात् पतनक्रियोत्पत्तिरेव, द्रवत्वात् स्यन्दनक्रियोत्पत्तिरेवानुमीयते; न

मीमांसाभाष्यपरिशिष्टमातृका

सिध्यति द्वैविध्यं तथापि शङ्कान्तरनिराकरणायेदमुक्तम्. क्वचिदियमाशङ्का भवति. भवतु देवदत्ते गतिपूर्विकैव देशान्तरप्राप्तिः आदित्ये तु नेति देवदत्तेपि प्रयत्नवदात्मसंयोगाद्धर्माधर्मसापेक्षाद्देशशरीरार्थसंयोगविभागो न घटयते. संयोगस्य प्रत्यासन्न एव द्रव्ये कार्यारम्भकत्वनियमादर्शनात्. प्रत्यासत्तिश्च द्विविधोल्लिखिता महती च. तत्र स्वसमवायलक्षणोल्लिखिता महती त्वेकार्थसमवायतापादेशश्च नोभयविधयापि प्रत्यासत्त्या शरीरात्मसंयोगस्य प्रत्यासन्न इति न देशसंयोगविभागावारब्धुं शक्यते. तेन तदतिरेकिणी गतिरनुमीयताम्. अदित्ये तु गतिहे...व देशान्तरप्राप्तिरस्त्विति ये शशंकेरन् तत्प्रतिबोधन...क्तं या या देशान्तरप्राप्तिः सा सा गतिपूर्विका. आदित्ये देशान्तरप्राप्तिरस्तीति युक्तमादित्येपि गत्यनुमानम्. एतच्चाभ्युपगम्य. . .दनोक्तम्. यद्यप्यादित्ये गतिहेरेव देशान्तरप्राप्तिरुपपद्यते तथापि गतिरेवानुमेयेति. तेन सर्वस्य देशान्तरप्राप्तेर्गतिपूर्वकत्वात् गुरुत्वात्पतनक्रियोत्पत्तिरेव द्रव्यत्वात् स्यन्दनक्रियोत्पत्तिरेवानुमीयते. न

पुनर्गुरुत्वद्रवत्वाभ्यां देशान्तरप्राप्तिरेवेति सिद्धं भवतीति तत्प्रतिबोधने तादृशः क्लेशः परिहृतो भवति इति । ननु अवयव्याकाशसंयोगो देशान्तर-प्राप्त्यात्मकोऽवयवाकाशसंयोगे भवति ; अवयव्याकाशसंयोगेऽपि स एव कारणम् ; न गतिः, यथावगतगतिकारणाभावात् । सत्यम् ; तेन 'संयोगजसंयोगातिरेकिणी देशान्तरप्राप्तिर्गतिपूर्विका' इति व्याप्तिराश्र-यणीया । नन्वेतदपि सामान्यतोदृष्टसम्बन्धमेव ; देवदत्तेऽप्यदृष्टस्वलक्षणयैव गत्या सह देशान्तरप्राप्तेः सम्बन्धग्रहणं यतः । अत एतदेव सामान्यतो-दृष्टसम्बन्धमनुमानमभिदधता देवदत्तेऽपि गतिः प्रत्यक्षा न भवतीत्युक्तम् ; अन्यथा प्रत्यक्षतोदृष्टसम्बन्धमिदमनुमानं स्यात् । "आदित्येऽपि गतिस्मरणम्" इति च 'स्मरणम्' इत्यनुमानमेवोक्तम्, गृहीतविषय-त्वसामान्यात् । गृहीतविषयमपि चानुमानं यथा प्रमाणम्, तथोक्तमेव निबन्धने ॥

१०५-१ शास्त्रम् * अत्र बौद्धाश्चोदयन्ति—प्रत्यक्षानुमानातिरिक्तं न विज्ञानं

मीमांसाभाष्यपरिशिष्टमातृका

पुनर्गुरुत्वद्रव्यत्वाभ्यां देशान्तरप्राप्तिरेवेति सिद्धं भवतीति, तत्प्रतिबोधने शशः क्लशः परिहृतो भवतीति ।

नन्ववयव्याकाशसंयोगो देशान्तरप्राप्त्यात्मकोऽवयवाकाशसंयोगो भवति. अवयव्याकाशसंयोगेपि स एव कारणम्. न गतिः यथावगतगतिकारणाभावात्. हत्यम्, तेन संयोगजसंयोगातिरेकिणी देशान्तरप्राप्तिर्गतिपूर्विकेति व्याप्तिराश्रयणीया.

नन्वेतदपि सामान्यतो दृष्टमेव. देवदत्तेप्यदृष्टस्वलक्षणयैव गत्यासह देशान्तरप्राप्तेस्संबन्धग्रहणम्. यतः अत एतदेव सामान्यतो दृष्टसंबन्धमनुमानमभिद-धता देवदत्तेपि गतिः प्रत्यक्षा न भव....क्तम्. अन्यथा प्रत्यक्षतो दृष्टमिदमनु-मानं स्यात्. आदित्ये....ति च स्मरणमित्यनुमानमेवोक्तं गृहीतविषयत्वसा... विषयमपि चानुमानम् यथाप्रमाणं तथोक्तमेव निबन्धने.

श........त्र बौद्धाश्चोदयन्ति प्रत्यक्षानुमानातिरिक्तं न विज्ञानं

प्रमाणं युक्तम् ; अर्थाविसंवादि हि ज्ञानं प्रमाणम् ; अविसंवादश्च प्रतिबन्धे सत्युपपद्यते ; प्रतिबन्धश्चार्थविज्ञानस्य तदुत्पत्तेः, नान्यथा । तत्र प्रत्यक्षं तावदर्थबलभावि प्रतिबद्धमर्थे । अनुमानं तु यद्यपि न साक्षादर्थजम्, तथापि तत्प्रतिबद्धहेतुप्रभवतया तदविनाभावीति युक्तं तयोः प्रामाण्यम् । यत् पुनः शास्त्रादि, न तत्तावत् साक्षादर्थजन्यम् ; नापि तत्प्रतिबद्धलिङ्गजन्यम् ; ततश्च तन्नाविसंवादकम् ; अतथाभूतं च न प्रमाणं तत् । तदुक्तं प्रमाणनिश्चये—

"प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मनः ।
अप्रत्यक्षस्य सम्बन्धादन्यतः प्रतिपत्तितः ॥" इति ।

यद्यत् स्वयमुपनिपत्य विज्ञानं जनयति, तत् प्रत्यक्षप्रमाणप्रमेयम् ; यत्तु न प्रत्यक्षम्, तस्य सामान्यात्मना सम्बद्धादेवार्थान्तारात् प्रतिपत्तिः, नान्यस्मात् । तथा च सति तस्यानुमेयत्वमेवेति ।

अत्र प्रतिविधीयते—सत्यम् ; अविसंवादकं विज्ञानं प्रमाणम् । अविसंवादस्तु नान्यतोऽर्थसत्तां निश्चित्यावसेयः ; किन्तु तज्जन्यविज्ञानेनैव तदर्थसत्तानिश्चयपुरःसरोऽविसंवादोऽवसेयः ; न पुनरन्यतोऽर्थसत्तानिश्च-

मीमांसाभाष्यपरिशिष्टमातृका

प्रमाणं युक्तम्. अर्थाविसंवादि हि ज्ञानं प्रमाणम्. अविसंवादश्च प्रतिबद्धे सत्युपपद्यते. प्रतिबन्धश्चार्थविज्ञानस्य तदुत्पत्तेः. नान्यथा. तत्र प्रत्यक्षं तावदर्थबलभावि प्रतिबद्धमर्थे. अनुमानं तु यद्यपि न साक्षादर्थजं तथापि तत्प्रतिबद्धहेतुप्रभवतया तदविनाभावीति युक्तं तयोः प्रामाण्यम्.

यत्पुनः शास्त्रादि न तत्तावत् साक्षादर्थजन्यं. नापि तत्प्रतिबद्धलिङ्ग-जन्यम्. ततश्च तन्नाविसंवादकम्. अतथाभूतं च न प्रमाणम्. तत्तदयुक्तं प्रमाणनिश्चये. प्रत्यक्षमनुमानं च प्रमाणे सदृशात्मना अप्रत्यक्षस्य संबन्धादन्यतः प्रतिपत्ति....इति. यद्यस्तत् स्वयमुपनिपत्य विज्ञानं जनयति. तत्प्रत्यक्षप्रमाण-प्रमेयम्. यत्तु न प्रत्यक्षं तस्य सामान्यात्मनः सबन्धः संबन्धादेवार्थान्तरात्प्रतिपत्तिः नान्यस्मात्. तथा च. सति तस्यानुमेयत्वमेवेति. अत्र प्रतिविधीयते. सत्यम्. अविसंवादकं विज्ञानं प्रमाणम्. अवि....दस्तु नान्यतोर्थसत्तां निश्चित्यावसेयम्. किन्तु तज....नैवतदर्थसत्तानिश्चयपुरस्सरोविसंवादो........नरन्यतोर्थसत्तानिश्च-

यावधारणेन । अविसंवादनिर्णयस्यानवस्थयोच्छिद्येताविसंवादनिर्णयः । तथा हि—तदर्थसत्तानिश्चायकं विज्ञानमनवधारितार्थाव्यभिचारमेवार्थं निश्चाययेत्, नान्यथेति तदर्थज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गः । न वानवधारितप्रतिबन्धादपि शब्दादर्थज्ञानं नोपपद्यते ; उत्पद्यमानं चार्थनिश्चायकम्; निश्चीयते च ; तेनार्थे सिद्धं ज्ञानस्यार्थाविसंवादित्वम् । एवं युक्तमेव शास्त्रोपमानार्थापत्तीनां प्रामाण्यम् ।

यत् पुनरत्र वेदितम्—

"शब्दलक्षणमुत्सृज्य यत्कृतं शास्त्रलक्षणम् ।
लक्ष्यलक्षणयोस्तस्मादिह नातीव सङ्गतिः ॥" तथा —
"यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।
अविशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् ॥" इति ;

तद्भाष्यकारस्य वचनम्—"अपि च, पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः ।" इति परित्यज्य अतिप्रतिकूलेन न्यायेन दर्शनान्तरमाकृष्येति मन्तव्यम्; उपपादितं हि—न शास्त्रातिरेकेण शाब्दलक्षणमस्ति इति ॥

मीमांसाभाष्यपरिशिष्टमातृका

यावधारणेनाविसंवादनिर्णयस्य...वस्थयोश्छिद्येताविसंवादनिर्णयः. तथा हि. तदर्थसत्तानिश्चायकं....नमवधारितार्थाव्यभिचारमेवार्थं निश्चाययेत्. नान्यथेति. तदर्थज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गः. न वानवधारितप्रतिबन्धादपि शब्दादर्थज्ञानं नोपपद्यते. उत्पद्यमानं चार्थनिश्चायकं निश्चितेव तेनार्थे सिद्धं ज्ञानस्याविसंवादित्वम्. एवमयुक्तमेव शास्त्रोपमानार्थापत्तीनां प्रामाण्यम्. यत्पुनरत्र वेदितं शास्त्रलक्षणमुत्सृज्य न कृतं शास्त्रलक्षणम्.

लक्ष्यलक्षणयोस्तस्मादिह नातीव सङ्गतिः ॥

तथा यच्चोक्तं शब्दविज्ञानादर्थविज्ञानं न विशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् इति. तद्भाष्यकारस्य वचनमपि च पौरुषेयाद्वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययः परित्यज्यातिप्रबलेन न्यायेन दर्शनान्तरमाकृष्येति मन्तव्यमुपपादितं हि न शास्त्रातिरेकेण शब्दलक्षणमस्तीति.

उपमानमपि * सादृश्यं कर्तृ, असन्निकृष्टेऽर्थे, सदृशे--इति यावत्;१०७-१ बुद्धिमुत्पादयति ; बुद्धिरुपमानम् । यथा गवये दृश्यमानं गां स्मरतः पुरुषस्य ।

अर्थापत्तिरपि—जीवतो देवदत्तस्य गृहाभावदर्शनेन बहिर्भावस्या-११०-१ दृष्टस्य कल्पनेति * तत्रार्थापत्तौ गृहाभावो बहिःसत्तायामकल्पितायां देवदत्तसत्तामनुपपत्तिं नीत्वा तदुपपादनाय बहिर्देशसम्बन्धं तस्यावबोधयती-त्येकेषां मतम्। अपरे तु—सत्तैव गृहाभावदर्शने सति यावद्बहिर्देश-सम्बन्धमात्मन उपपत्तये कल्पयतीति । अन्ये तु—गृहाभाव एवानुपपन्नो बहिर्भावं गमयतीति मन्यन्ते । तदनुपपन्नम् । कथमसौ न नोपपद्यत इति चेत्, तर्हि जीवनं देशस्थित्या व्याप्तं देशसम्बन्धानवगमेऽनुपपन्नम्; अभावस्य मृतेष्वजातेषु च संभवान्न केवलस्यानुपपत्तिरस्तीति ॥

अभावप्रमाणविषयेऽप्यप्रतीयमानस्य यः प्रमाणाभावः स एव तस्या-११८-१

मीमांसाभाष्यपरिशिष्टमातृका

उपमान.....दृश्यमकर्तृसन्निकृष्टार्थे सदृश इति यावत्. बुद्धिमुत्प... द्धिरुपमानं यथा गवये दृश्यमानं गां स्मरतः पुरु....र्थापत्तिरपि जीवतो गृहादेव-दत्तस्य गृहाभावदर्शनेन बहिर्भा. .दृष्टस्य कल्पनेति तत्रार्थापत्तौ गृहाभावो बहिर्यस्सत्ता...........यां देवदत्तसत्तामनुपपत्तिं नीत्वा तदुपपादनाय बहि-र्देशसंबन्धं तस्यावबोधयतीत्येकेषां मतम्.

अपरे तु सत्तैव गृहाभावदर्शने सति यावद्बहिर्देशसंबन्धमात्मन उपपत्तये कल्पयतीति. अन्ये तु गृहाभाव एवानुपपन्नो बहिर्भावं गमयतीति मन्यते. तदनुपपन्नम्. कथमसौ नोपपद्यत इति चेत् तर्हि जीवनदेशस्थित्याप्याप्तं देशसंबन्धानवगमेनुपपन्नं भावस्य मृतेष्वजातेषु च संभवान्न केवलस्यानुप-पत्तिरस्तीति ।

अभावप्रमाणविषयेप्यप्रतीयमानस्य यः प्रमाणाभावः स एव तस्या-

र्थस्याभावः ; नापरः ; न कश्चित् भूतलाद्यधिकरणे घटाद्यभावः— इति न प्रमाणान्तरमभावाख्यमस्ति, प्रमेयाभावात् । प्रमाणाभाव एव प्रमेय इति चेत्; न , तस्यापि भूतलादिमात्रोपलब्धिरूपत्वात् । का पुनरियं भूतलादिमात्रोपलब्धिः ? न तावत्स्वरूपोपलब्धिरेव, घटसंयुक्तेऽपि स्वरूपोपलम्भात् । तन्मात्रोपलब्ध्यात्मकदृश्यानुपलम्भरूपाभावावगमरूपा केवलोलब्धिश्चेत्, अङ्गीकृतं तर्हि कैवल्यं नाम स्वरूपान्तरमिति सिद्धं प्रमेयान्तरम् । अत्रोच्यते—स्वरूपोपलब्धिरेव भूतलादेर्द्विविधा—एका अर्थान्तरसंसर्गवती, अपरा भूतलैकविषया । सा द्विविधा—प्रतियोगिनि दृश्ये चादृश्ये च । तत्र दृश्ये प्रतियोगिनि या भूतलैकविषयोपलब्धिः, सा घटाद्यनुपलब्धिः ; सैव चाभाव इति न किञ्चिद्दूषणम् । येऽपि चाभावं प्रमाणं वदन्ति, तेऽपि चाप्यनवधारिते ह्यभावे तन्मात्रोपलब्धिमिच्छन्त्येव । तथा चाहुः—

"स्वरूपमात्रं दृष्ट्वापि वेश्माद्यर्थं स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥" इति ।

मीमांसाभाष्यपरिशिष्टमातृका

र्थस्याभावः नापरः न कश्चिद्भूतलाद्यधिकरणे घटाद्यभाव इति न प्रमाणान्तरमभावाख्यमस्ति प्रमेयाभावात् प्रमाणाभाव एव प्रमेय इति चेत् तस्यापि भूतलादिमात्रोपलब्धिरूपत्वात् का पुनरियं भूतलादि. .त्रोपलब्धिः न तावत्स्वरूपोपलब्धिरेव घटसंयु. . . . .भात् तन्मात्रोपलब्ध्यात्मकदृश्यानुपलम्भरूपाभावा. . . . . .वलोपलब्धिश्चेदङ्गीकृतम्. तर्हि कैवल्यं नाम स्वरूपान्त. . . . . मयान्तं· अत्रोच्यते स्वरूपोपलब्धिरेव भूतलादेर्द्विविधा एक. . .र्थान्तरसंयोगवती अपरा भूतलैकविषया. सा द्विधा प्रतियोगिनि दृश्ये चादृश्ये च. तत्र दृश्ये प्रतियोगिनि या भूतलैकविषयोपलब्धिः सा घटाद्यनुपलब्धिः सैव चाभाव इति न किञ्चिद्दूषणम्.

येपि चाभावं प्रमाणं वदन्ति तेप्यनवधारिते ह्यभावे तन्मात्रोपलब्धिमिच्छन्त्येव. तथाहुः —

स्वरूपमात्रं दृष्टं हि वेश्माद्यर्थं स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदेव प्रतिपद्यते ॥ इति ।

ननु यत्रार्थान्तरसंसर्गवती धीरुत्पन्ना, कथं तत्र तन्मात्रोपलब्धि-रुपपद्यते, यद्यर्थान्तरस्य तत्राभावो न जातः? उच्यते—शक्यमभावेऽपि वक्तुमिदम् 'यस्य यत्र भावधीरासीत्, कथं तस्य तत्राभावः?' इति। अथाभावस्य कारणं ब्रूयात्, तदा तन्मात्रोपलब्धेरेव तत् कारणमस्तु। अथ मतम्—मुद्गरप्रहारादिकः क्षणिकोऽभावस्य कारणम्, निवृत्तेऽपि च तस्मिन् कुतो भवेदिति। यदि कपालमात्रं तन्मात्रोपलब्धिं जनयति, नार्थान्तरसहितम्; अर्थान्तरसहितं तु अर्थान्तरसंसर्गवतीम्। यत्र तु प्राक् संसर्गबुद्धिर्जाता, तत्र घटादौ देशान्तरे स्थिते कपालादिजन्मनि वा निमित्ते स्थित एव तन्मात्रोपलब्धिर्नानुपपन्ना। ननु भवतु प्रतियोगिनोऽन्यत्र स्थितौ विरुद्धार्थान्तरोदये वा तन्निमित्ता तन्मात्रोपलब्धिः; संसृष्ट-बुद्धिस्तु किमिति नोत्पद्यते, निमित्तविनाशाभावात्? न हि भवन्तः प्रध्वंसा-भावमिच्छन्ति। अहो बत! स्वदर्शनभ्रमेण चोदितम्। न हि वयं संसृष्टबुद्धेरनुत्पत्तिं तन्मात्रबुद्धेरन्यां मन्यामहे। नापि तत्कारणविनाशमन्यं

मीमांसाभाष्यपरिशिष्टमातृका

ननु यत्रार्थान्तरसंसर्गवती धीरुपपन्ना कथं तत्र तन्मात्रोपलब्धिरुपपद्यते यद्यर्थान्तरस्य तत्राभावो न जातः. उच्यते. शक्यमभावेपि वक्तुमिदं यस्य यत्राभावधीरासीत् कथं तस्य तत्राभाव इति. अथाभावस्य कारणं ब्रूयात् तदा तन्मात्रोपलब्धेरेव तत्कारणमस्तु. अथ मतं मुद्गरप्रहार........भावस्य कारणं निवृत्तेपि च तस्मिन् कुतो भवेदिति........लमात्रतन्मात्रोपलब्धिं जनयति. नार्थान्तरसहित........न्त्वर्थान्तरसंसर्गवतीं यत्र तु प्राक्संसर्गबुद्धिर्जाता तत्र घटा.....स्थिते कपालादिजन्मनि वा निमित्ते स्थित एव तन्मात्रोपलब्धिर्नानु...

ननु भवतु प्रतियोगिनोन्यत्र स्थितौ विरुद्धार्थान्तरोदये...तन्निमित्तातन्मा-त्रोपलब्धिः संसृष्टबुद्धिस्तु किमिति नोत्पद्यते निमित्तविनाशाभावात्. न हि भवन्तः प्रध्वंसाभावमिच्छन्ति. अहो बत. स्वदर्शनभ्रमेण चोदितम्. न हि वयं संसृष्टबुद्धेरनुपपत्तिं तन्मात्रबुद्धेरन्यां मन्यामहे. नापि तत्कारणविनाशमन्यं

तत्कारणोदयात् । ततश्च तन्मात्रबुद्धिकारणोपनिपातादत्र तन्मात्रबुद्ध्युदयात् संसृष्टबुद्धिकारणाभावात् तदनुत्पत्तिः सिद्धा। ये तु व्यतिरेकिविनाशाख्यं प्रध्वंसाभावमाहुः, तन्मतेऽपि व्यतिरेकिणि तस्मिन् जातेऽपि किमिति भावस्य प्राग्वदुपलब्धिर्न भवतीति पर्यनुयोगो दुष्परिहरः । तेन विरोधादुपमर्दाद्वा—इत्यादयश्च यावन्तः प्रतिसमाधानोपायाश्चिन्त्यन्ते, तेऽप्येतेनैव मार्गेण दूरोत्सारिता वेदितव्याः । अतः स्थितमिदं दृश्यानुपलब्धिरेव तन्मात्रोपलब्धिरूपाभाव इति । ननु 'भूतले घटो नास्ति' इति प्रत्यक्षा बुद्धिरेव बोध्यमुपकल्पयति । उच्यते—बोध्यावगमानुमेया सा, न प्रत्यक्षा । तर्हि सा संवेद्यमुपकल्पयति । सत्यमस्त्येषा संवित्; सा किं तन्मात्रोपलब्धिरेव, अन्या वेति चिन्त्यताम् । तत्र अन्या न युज्यते, संवेद्यान्तरस्य न्यायानुसारेणाघटमानत्वात् । यस्य यत्राभावस्तस्य तत्र दृश्यानुपलब्धिरभाववादिनापि तावदाश्रयणीया; तत्र सैवाभावोऽस्तु; अलमन्येनाभावेन ।

मीमांसाभाष्यपरिशिष्टमातृका

तत्कारणोदयात्. ततश्च तन्मात्रबुद्धिकारणोपनिपाता. अत्र तन्मात्रबुध्युदयात् संसृष्टबुद्धिकारणाभावात् तदनुत्पत्तिस्सिद्धा.

ये तु व्यतिरेकिविनाशाख्यं प्रध्वंसाभावमाहुः. तन्मतेपि व्यतिरेकिणि तस्मिन् जातेपि किमिति भावस्य प्राग्वदुपलब्धिर्न भवतीति पर्यनुयोगो दुष्परिहारः. तेन विरोधादुपमर्दाद्या इत्यादयश्च यावन्तः प्रतिसमाधानोपायाश्चिन्त्यन्ते तेप्येतेनैव मार्गेण दूरोत्सारिता वेदितव्याः । अतः स्थितमिदं दृश्यानुपलब्धिरेव तन्मात्रोपलब्धिरूपाभाव इति.

ननु भूतले घटा.....ति प्रत्यक्षबुद्धिरेव बोध्यमुपकल्पयति. उच्यते....... मानुमेया सा न प्रत्यक्षा. तर्हि सा संवेद्यमुप......सत्यमस्त्येषा संवित्. सा किं तन्मात्रोपलब्धिरेव न्या.....ति चिन्त्यतां. तत्रान्या न युज्यते संवेद्यान्तरस्य न्यायानुसा....घटमानत्वात्. यस्य यत्राभावस्तस्य तत्र दृश्यानुपलब्धिरभा...दिनापि तावदाश्रयणीया. तत्र सैवाभावोस्तु अलमन्येनाभावेन.

नन्वेवं प्रसक्तं तर्हि संविदद्वैतम् । शक्यते हि वक्तुमेतत्—संविदेवास्तु, मा भूत्संवेद्यमिति । विषमोऽयमुपन्यासः ; संविदतिरेकी नीलादिराकारः प्रथते इति प्राक् प्रतिपादितम् ; अभावस्य तु नाकारोऽनुभूयते, केवलम् 'नास्ति' इति शब्दव्यवहारादेव । तदुक्तमभियुक्तैः—" न ह्यभावो नाम विग्रहवान् , यः साक्षात्कर्तव्यः ; अपि तु व्यवहर्तव्यः" इति । उक्तश्च प्रध्वंसाभावस्य व्यतिरेके नष्टस्याप्युपलम्भप्रसङ्गः । संवेद्यान्तराभावे संविदन्तरानुपपत्तेस्तन्मात्रोपलब्धावेव स्वयंप्रकाशायामेष व्यपदेशः प्रवर्तत इत्यलमतिप्रसङ्गेन । इयता शक्या एवातिस्थूलदर्शनाभिनिवेशोपहतबुद्धयोऽपि बोधयितुम् । तदुक्तं महार्थविद्भिः—" सद्वादीति वाभिनिविष्ट इ * * * *"

ननु प्रत्यक्षादीन्यन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणम् *१२४-१ इत्यनेन शब्दस्याप्रामाण्यं ब्रुवन् वैदिकव्यतिरेकेणान्यः शब्दो न प्रमाणमिति दर्शयति । यदा च लोकानुसारेण स्वातन्त्र्येणार्थपरिच्छेदकत्वं शब्दस्य निरस्तम्, तदा च पश्वादिना फलेन कर्मस्वरूपादेव भावितव्यम् ; नापूर्वतः, तदस्तित्वे प्रमाणाभावात् ; अनेनाभिप्रायेणाह—कर्मकाले १२९-१

मीमांसाभाष्यपरिशिष्टमातृका

नन्वेवं प्रसक्तं· तर्हि संविदद्वैतं शक्यते हि वक्तुमेतत् संविदेवास्तु माभूत्संवेद्यमिति. विषमोयमुपन्यासः संविदतिरेकिनीलादिराकारः प्रथत इति प्राक् प्रतिपादितम्. अभावस्य तु नाकारोनुभूयते केवलं नास्तीति शब्दव्यवहारादेव. तदुक्तमभियुक्तैः. न ह्यभावो नाम विग्रहवान्. यस्साक्षात्कर्तव्यः अपि तु व्यवहर्तव्य इति उक्तं च प्रध्वंसाभावस्य व्यतिरेके नष्टस्याप्युपलम्भाप्रसङ्गः संवेद्यान्तराभावे संविदन्तरानुपपत्तेः तन्मात्रोपलब्धावेव स्वयंप्रकाशायामेष व्यपदेशः प्रवर्तत इत्यलमतिप्रसङ्गेन...शक्या एवातिस्थूलदर्शनाभिनिवेशो वह... बुद्ध.....धयितुम्. तदुक्तं महार्थविद्भिः सद्वादीति वाभिनिविष्ट .इ.....प्रत्यक्षादीनि भवन्तु प्रमाणानि. शब्दस्तु न प्रमा...न शब्दस्याप्रामाण्यं ब्रुवन् वैदिकव्यतिरेकेणान्यश्शब्द....णमिति दर्शयति. यदा च लोकानुसारेण स्वातन्त्र्येणा........ च्छेदकत्वं शब्दस्य निरस्तम्. तदा च पश्वादिना फलेन कर्मस्वरूपादेव भवितव्यम्. नापूर्वतः. तदस्तित्वे प्रमाणाभावात्. अनेनाभिप्रायेणाह. कर्मकाले

च कर्मफलेन भवितव्यम् * ननु च कृषिवत् कालान्तरे फलं दास्यतीति
१२९-४चेत्, परिहरति—न कालान्तरे फलम् इत्यादि * कृषिर्हि पाटनाद्यवान्तरकार्यपरंपरया कालान्तरेऽपि फलं ददातीति; इष्टेस्तु तथाभूतमवान्तरकार्यं नास्ति, प्रमाणाभावात्। ननु पश्वादिफलोत्पत्तिरेव प्रमाणम्; न हि सा सेवादेर्दृष्टात् कारणादुपपद्यते, व्यभिचारित्वात् इत्याशङ्क्याह—
१२९-९प्रत्यक्षं च इत्यादि * सेवादि दृष्टं कारणमस्ति; न च तस्मिन् दृष्टे कारणे सत्यदृष्टं कल्पयितुं शक्यते, प्रमाणाभावात्। ननु व्यभिचारित्वान्न तन्मात्रं कारणमित्युक्तम्। अत्रोच्यते—व्यभिचारदर्शनात्सेवादीनां कारणानां दृष्टानां कश्चिदवान्तरविशेषोऽदृष्टोऽप्यभ्युपगन्तव्यः; न तु पुनरर्थान्तरमेव, धर्मकल्पनाया धर्मिकल्पनातो लाघवादिति। अर्थवादेषु च शब्दस्यार्था-
१३०-८संस्पर्शित्वात् चोदनास्वपि न प्रामाण्यं स्यादित्याह—तत्सामान्यादग्निहोत्रादिचोदनास्वप्यनाश्वासः इति *

मीमांसाभाष्यपरिशिष्टमातृका

च कर्मफलेन भवितव्यम्.

ननु च कृषिवत्कालान्तरे फलं दास्यतीति चेत्, परिहरति. न कालान्तरे फलमित्यादि. कृषिर्हि पाटनाद्यवान्तरकार्यपरम्परया कालान्तरेपि फलं ददातीति. इष्टेस्तु तथाभूतमवान्तरकार्यं नास्ति प्रमाणाभावात्. ननु पश्वादिफलोत्पत्तिरेव प्रमाणम्. न हि सा सेवादेर्दृष्टात्कारणादुपपद्यते व्यभिचारित्वादित्याशङ्क्याह. प्रत्यक्षाश्चेत्यादि. सेवादि दृष्टं कारणमस्ति. न च तस्मिन्दृष्टे कारणे सत्यदृष्टं कल्पयितुं शक्यते. प्रमाणभावात्,

ननु व्यभिचारित्वान्न तन्मात्रं क.....णमित्युक्तम्. अत्रोच्यते. व्यभिचारदर्शनात् सेवादीनां.....दृष्टानां कश्चिदवान्तरविशेषो दृष्टोप्य.... ननु पुनरर्थान्तरमेव धर्मकल्पनाया धर्मिपल्प........दर्थवादेषु च शब्दस्यार्थासंस्पर्शित्वाच्चोदनास्वपि न.......त्सामान्यादग्निहात्रचोदनास्वप्यनाश्वास इति.

औत्पत्तिकस्तु * प्रमाणान्तरापेक्षत्वाच्छब्दस्यापूर्वात्मनि कार्ये १३१-१
चोदना प्रमाणं न भवतीतीमं पक्षं तुशब्दो व्यावर्तयति । अपौरुषेयः १३१-२
शब्दस्यार्थेन सह सम्बन्धः, तस्यार्थस्य ज्ञानम्, यथा चोदनाजनितः सम्यक्प्रत्ययः इति * पूर्वपक्षिणोऽभिमन्वते—यद्यपि चोदनातोऽपूर्वात्मकं कार्यमवगम्यते, तथापि प्रमाणान्तरसव्यपेक्षत्वाच्छब्दस्यापूर्वं प्रति निमित्तत्वाभावादनवगतावेवावगतिभ्रम इति । तच्चेदमशक्यम्; न हि शब्दस्यार्थाभिधाने प्रमाणान्तरापेक्षा विद्यते; लौकिके तु वचसि या प्रमाणान्तरापेक्षा सा पौरुषेयत्वात्; न ह्यप्रतीतेऽर्थे पुरुषा वाक्यान्युच्चारयन्ति; तथोच्चारयन्तो वा विहन्यन्ते; वेदस्य त्वपौरुषेयस्य नास्ति प्रमाणान्तरापेक्षायां कोऽपि हेतुः । ननु—

"लोकावगतसामर्थ्यो वेदे शब्दोऽर्थबोधकः ।
लोके च लिङ्गभावेन प्रतीतिर्भवताश्रिता ॥"

तेनावगतसामर्थ्येऽप्यवाचकभाव एवावगत इति कथं शब्दात् प्रमाणान्तरानपेक्षादर्थावगतिः ? उच्यते—विशिष्टवक्तृज्ञानानुमानं विना नार्थावसायः,

मीमांसाभाष्यपरिशिष्टमातृका

औत्पत्तिकस्तु प्रमा...रापेक्षत्वाच्छब्दस्यापूर्वात्मनि कार्ये चोदनाप्रमाणं न भवतीति इमं पक्षं तुशब्दो व्यावर्तयति. अपौरुषेयश्शब्दस्यार्थेन सह संबन्धस्तस्यार्थस्य ज्ञानं यथा चोदनाजनितः सम्यक्प्रत्यय इति पूर्वपक्षिणोभिमते यद्यपि चोदनातो पूर्वात्मकं कार्यमवगम्यते. तथापि प्रमाणान्तरसव्यपेक्षत्वाच्छब्दस्यापूर्वं प्रति निमित्तत्वाभावादनवगतावेवावगतिभ्रम इति तच्चेदमशक्यम्. न हि शब्दस्यार्थाभिधाने प्रमाणान्तरपेक्षा विद्यते. लौकिके तु वचसि या प्रमाणान्तरापेक्षा सा पौरुषेयत्वात्. न ह्यप्रतीतेर्थे पुरुषा वाक्यान्युच्चारयन्ति. तथोच्चारयन्तो वापि हन्यन्ते वेदस्य त्वपौरुषेयस्य नास्ति प्रमाणान्तरापेक्ष. ..हेतुः.

ननु लोकावगतसामर्थ्यो वेदे शब्दोर्थबो.........के च लिङ्गभावेन प्रतीतिर्भवताश्रिता. तेना......प्यवाचकभाव एव नावगत इति कथं शब्दा......नपेक्षादर्थावगतिः. उच्यते. विशिष्टवक्तृज्ञानानुमान.............नार्थावसायः.

विशिष्टवक्तृज्ञानस्यैवावगमात् । वक्तृज्ञानस्य च विशिष्टस्यावगमो लिङ्गविशेषात् । लिङ्गं च पदजातप्रयोग एव । तस्य चार्थविशेषवाचकपदतैव विशेषः । यदर्थप्रतिपादनसमर्थं पदजातं प्रत्ययितः प्रयुङ्क्ते, तदर्थविषयो वक्त्रभिप्रायोऽनुमीयते ; न पुनरन्यार्थविशेषविषयवक्त्रभिप्रायानुमानसिद्धिरिति लिङ्गतापि वाचकतां विना नास्ति । यत्तु वाचकस्यापि लिङ्गताश्रीयते तत् पौरुषेयत्वादिति विविक्तं नीतिपथे । तदेवं शब्दस्य प्रमाणान्तरनिरपेक्षतया घटमाने तस्याप्यपूर्वकार्यावगमे—यदि परं सम्बन्धस्य पौरुषेयत्वेन प्रमाणान्तरप्रतीतेऽर्थे पुरुषाणां सङ्केतकरणसंभवात् अपूर्वात्मनि कार्ये तदनुपपत्तेः सङ्केतासंभवात् अपूर्वार्थत्वे वेदानां निरस्ते प्रत्यायकत्वात् पौरुषेयत्वापत्तौ प्रमाणान्तरापेक्षत्वात् अप्रत्यये प्रत्ययाभिमानः—इति वाच्यम् ; तच्च नास्ति, सम्बन्धस्यापौरुषेयत्वात् । तस्मात् सम्यक्प्रत्यय एवासौ, न पुनरप्रत्यये प्रत्ययाभिमानः । तदिदमाह—
१३१-५पौरुषेये सति सम्बन्धे शब्दाद्यः प्रत्ययः तस्य मिथ्याभाव आशङ्क्येत ; परप्रत्ययो हि तदा स्यात् * परस्मात् पुरुषात् प्रत्ययः । कस्मात्
१३१-८पुनः शब्दे ब्रुवति मिथ्याशङ्का न भवतीत्याह—ब्रवीतीत्युच्यते

मीमांसाभाष्यपरिशिष्टमातृका

विशिष्टज्ञानस्यैवावगमात्. वक्तृज्ञा...च विशिष्टस्यावगमो लिङ्गविशेषात्. लिङ्गं च पदजातप्रयोग एव. कस्य चार्थविशेषवाचकपदतैव विशेषः. यदर्थप्रतिपादनसमर्थं पदजातं प्रत्ययितः प्रयुङ्क्ते तदर्थविषयो वक्त्रभिप्रायोनुमीयते. न पुनरन्यार्थविशेषविषयवक्त्रभिप्रायानुमानसिद्धिरिति लिङ्गतापि वाचकतां विना नास्ति.

यत्तु वाचकस्यापि लिङ्गताश्रीयते तत्पौरुषेयत्वादिति न विविक्तं नीतिपथे. तदेवं शब्दस्य प्रमाणान्तरनिरपेक्षया घटमाने तस्यापूर्वकार्यावगमे यदि परं संबन्धस्य पौरुषेयत्वेन प्रमाणान्तरप्रतीतेर्थे पुरुषाणां सङ्केतकरणासंभवादपूर्वात्मनि कार्ये तदनुपपत्ते......केतासंभवादपूर्वार्थत्वे वेदानां निर... .त्वात् पौरुषेयत्वापत्तौ प्रमाणान्तरापेक्षत्वादप्र.......याभिमान इति वाच्यम्. तच्च नास्ति संबन्धस्या...त् तस्मात्सम्यक्प्रत्यय एवासौ· न पुनरप्रत्यय...न तदिदमाह पौरुषेये सति संबन्धे शब्दाद्यः प्रत्य.....भाव आशङ्क्येत परं प्रत्ययो हि तदा स्यात् परस्मात्पु....प्रत्ययः कस्मात्पुनश्शब्दे ब्रुवति मिथ्याशङ्का न....इत्याह. ब्रवीतीत्युच्यते

अवबोधयतीति * एतदेव विवृणोति—बुध्यमानस्य निमित्तं भवतीति * ततः किमित्याशङ्क्याह—शब्दे चेन्निमित्तभूते स्वयमवबुध्यते, कथं विप्रलब्धं१३१-९ ब्रूयात् 'नैतदेवम्' इति * अतथाभूतमपि परविप्रलम्भार्थं केचिद्ब्रूयुः ; स्वयं तु प्रतिपत्तावेतन्न संभवतीति । तस्मात् यथैव शब्दादवगतिः, तथाभूत एवार्थः ; शब्दप्रतीतिबलेनैव । न च मिथ्यैतत्—इति पुनरव्यपदेश्यः प्रत्यक्षः प्रत्ययो भवतीति । प्रत्यायक इति हि प्रत्ययं१४१-२ दृष्ट्वावगच्छामः * प्रथमश्रुतो न प्रत्यायक इत्यप्यवगच्छामः प्रथमश्रवणे प्रत्ययमदृष्ट्वा । स्वभावतो ह्यसम्बन्धावेतावर्थशब्दौ । कुत इत्याह—मुखे१४३-२ हीति * देशभेदेन तादात्म्याभावादित्यर्थः । तथा परस्परपरिहारेण प्रतीतेर्भेद इत्याह—शब्दोऽयम्, नार्थ इत्यादि * तथा रूपभेदादपि भेद इत्याह१४३-३ —रूपभेदोऽपीति * रूपभेदवतोरतदात्मनोश्च यः सम्बन्धः, स कृतको१४३-४ दृष्टः यथा रज्जुघटयोः ; अर्थशब्दावपि तथाभूतौ । अतस्तयोरपि सम्बन्धः कृतक एवेति ॥

मीमांसाभाष्यपरिशिष्टमातृका

अवबोधयतीति. एतदेव विवृणोति बुध्यमानस्य निमित्तं भवतीति. ततः किमित्याशङ्क्याह. शब्दे चेन्निमित्तभूते स्वयमवबुध्यते. कथं विप्रलब्धुं ब्रूयात्. नैतदेवमिति. अतथाभूतमपि परविप्रलम्भार्थं केचिद्ब्रूयुः. स्वयं तु प्रतित्तावेतन्न संभवतीति तस्माद्यथैव शब्दादवगतिः तथाभूत एवार्थश्शब्दप्रतीतिबलेनैव. न च मिथ्यैतदिति पुनरव्यपदेश्यः प्रत्यक्षप्रत्ययो भवतीति. प्रत्यायक इति हि प्रत्ययं दृष्ट्वावगच्छामः प्रथमश्रुतो न प्रत्यायक इत्यप्यवगच्छामः. प्रथमश्रवणे प्रत्ययमदृष्ट्वा. स्वभावतो ह्यसंबन्धावेतावर्थ...कुत इत्याह—मुखे हीति. देशभेदेन तादात्म्य.....र्थः. तथा परस्परिहारेण प्रतिते भेद इत्याह.....दि. तथा रूपभेदादपि भेद इत्याह—रूपभेदेऽपीति...वतो तदात्मनोश्च यस्संबन्धस्स कृतको दृष्टः. यथा रज्जुघ...शब्दावपि तथाभूतौ· अतस्तयोरपि संबन्धः कृतक एव....

१४५-१ अथ गौः * यद्येवं वर्णात्मक एव शब्दः, तदार्थप्रत्ययो नोपपद्यते। कथम्? उच्यते—न तावत्सत्तया वर्णानां वाचकत्वम्, सर्वदार्थप्रत्ययापत्तेः। नाप्युपलब्धेः; यस्मादेकैकाक्षरविज्ञानात्तावदर्थो नोपलभ्यते। न चाक्षरव्यतिरिक्तः कश्चित्समुदायो नामास्ति, यदुप-
१४५-४लम्भादर्थावगतिः। कस्मादित्याह—यदा हीति * समुदायारम्भो हि वर्णानां सत्तया वा उपलब्ध्या वा। तत्र न सत्तया, अतिप्रसङ्गात्। नोपलब्ध्या, सहोपलम्भाभावात्। अतो गकारादिव्यतिरिक्तो वर्णसमुदाया-
१४५-७त्मकोऽन्यः समुदायो नास्ति, यतोऽर्थप्रत्ययः स्यात्। अन्तरिते शब्दे स्मरणादर्थप्रत्यय इति चेत् * न, स्मृतेरपि क्षणिकत्वात्। क्रमोत्पन्नानामेककालभावाभावादक्षरैस्तुल्यता। न चाक्रमवत्यः स्मृतयः संभवन्ति। संभवेऽपि व्यतिक्रमोच्चरितेषु नानावक्तृप्रयुक्तेष्वपि वर्णेष्वतिप्रसङ्गः। न च पूर्ववर्णजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रत्यायकता, व्यतिक्रमे वक्तृभेदे च प्रसङ्गात्। किञ्च संस्कारोऽपि चिन्तनहेतुभूतभावनावासनापर्यायवेद्य उतान्य एवेति। यदि भावनात्मकः, तदा तस्य वर्णस्मृति-

मीमांसाभाष्यपरिशिष्टमातृका

अथ गौः—

यद्येवं वर्णात्मक एव शब्दः तदार्थप्रत्ययो नोपपद्यते. कथम्. उच्यते. न तावत्सत्तया वर्णानां वाचकत्वं सर्वदार्थप्रत्ययापत्तेः. नाप्युपलब्धेः यस्मादेकैकाक्षरविज्ञानात् तावदर्थो नोपलभ्यते. न चाक्षरव्यतिरिक्तः कश्चित्. समुदायो नामास्ति यदुपलम्भादर्थावगतिः. कस्मादित्याह यदि हीति. समुदायारम्भो हि वर्णानां सत्तया वा उपलब्ध्या वा. तत्र न सत्तया. अतिप्रसङ्गात्. नोपलब्ध्या. सहोपलम्भाभावात्. अतो गकारादिव्यतिरिक्तवर्णसमुदायात्मकोन्यस्समुदायो नास्ति. यतोर्थप्रत्ययस्स्यात् अन्तरिते शब्दे स्मरणादर्थप्रत्यय इति चेत्. न. स्मृतेरपि क्षणिकत्वात् क्रमोत्पन्नानामेककालाभावाभाव....दक्षरैस्तुल्यता.

न चाक्रमवत्यः स्मृतयः संभवन्ति. सं.......व्यतिक्रमोच्चरितेषु नानावक्तृप्रयुक्तेष्वपि वर्णेष्व......सङ्गः. न च पूर्ववर्णसंकारसहितस्यान्त्य.... क........व्यतिक्रमे वक्तृभेदे च प्रसङ्गात्. किञ्च संस्कारोपि चिन्तन........ ...वासनापर्यायवेद्य उतान्य एवेति. यदि भावनात्मक....तदा तस्य वर्णस्मृति-

मात्रहेतुत्वादन्त्योपलब्धिसमये पूर्ववर्णबुद्धेः संस्कारारम्भकत्वादन्तर्हिते शब्द इत्यतो न विशेषः। अन्यस्य तु संस्कारस्यार्थप्रतिपत्त्यनुगुणस्योत्पत्तौ कारणं नास्ति। न च वर्णोपलब्धिरेव कारणम्। तत्रैकैकवर्णोपलब्धावदर्शनात्, व्यतिक्रमे वक्तृभेदे च प्रसङ्गात्। यदुक्तं वार्तिककारेण—

"यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः"॥ इति।

तत्रेदं वक्तव्यम्। सत्यमेवं वर्णानां संभूयकारित्वानुपपत्तौ यावन्तो यादृशा ये च नोपकारिणः; अन्त्यवर्णोपलब्धिरेव कारणम्, अनन्तरमर्थप्रतीतेः। तस्मात्तस्यैव वाचकत्वापत्तौ वक्त्रैक्यनिरन्तरोच्चारणानामनुपयोगात् पूर्ववर्ण-क्रमाणामनुपयोगः स्यात्। अथोच्येत—पूर्ववर्णजनितसंस्कारसहकार्यन्त्यवर्णः प्रत्यायक इत्यस्ति पूर्ववर्णोपयोग इति, निरस्तोऽयं पक्षः।

मीमांसाभाष्यपरिशिष्टमातृका

मात्रहेतुत्वादन्त्योपलब्धिसमये पूर्ववर्णबुद्धेस्संस्कारारम्भकत्वादन्तर्हितः शब्द इत्यतो न विशेषः. अन्यस्य तु संस्कारस्यार्थप्रतिपत्त्यनुगुणस्योत्पत्तौ कारणं नास्ति.

न च वर्णोपलब्धिरेव कारणं तत्रैकैकवर्णोपलब्धौ दर्शनात्. व्यमितक्रे वक्तृभेदे च प्रसङ्गात्. तदुक्तं वार्तिककारेण—

यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः॥ इति.

तत्रेदं वक्तव्यम्. सत्यमेवं वर्णानां संभूयकारित्वानुपपत्तौ यावन्तो यादृशा ये च नोपकारिणः. अन्त्यवर्णोपलब्धिरेव कारण. नन्तरमर्थप्रतीतिस्तस्मा-त्तस्यैव वाचकत्वापत्तौ वक्त्रैक्यनिरन्तरो....च्चारणानामनुपयोगात् पूर्ववर्ण-क्रमाणामनुप........त्. अथोच्येत. पूर्ववर्णजनितसंस्कारसहकारी...........वर्णः प्रत्यायक इति अस्ति पूर्ववर्णोपयोग इ.....................यं पक्षः

N

१४६-८ पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इत्यदोषः * अस्यार्थः—न वयं भावनाख्यमेव संस्कारमर्थप्रतीत्यङ्गं ब्रूमः, किन्त्वपूर्वमेव। स्वभावत एव सर्ववर्णास्तदाधानसमर्थाः। तत्र हि द्व्यक्षरपदे तावद्व्यतिक्रमेणार्थप्रतीतिरयुक्ता, प्रत्यायकाभिमतवर्णस्य व्यवधानात्। त्र्यक्षरादिष्वपि पदेषु पूर्ववर्णक्रमो व्यवहारसिद्ध आदरणीय एव ; प्रथमो हि वर्णः सर्वपदेष्वेव उत्तरवर्णोपजन्यसंस्कारविशेषाधायकतयार्थप्रत्यायक इष्यते। नैरन्तर्यमपि च संस्कारस्याशुतरविनाशित्वादुपयोग्येव। एकवक्तृप्रयुक्ताश्च यथादर्शनं संस्काराधायका इति न किञ्चिदनुपपन्नम्।

नन्विदं बहुतरमदृष्टं कथं कल्प्यते? यावतैक एव शब्दो गकारादिव्यतिरिक्तो वाचकोऽस्तु। न, तस्याप्रतीतेः ; न हि गवादिपदेषु गकारादिव्यतिरिक्त एकः शब्दोऽवभाति। ननु सर्ववर्णेषु 'शब्दः, शब्दः' इत्येकबुद्धेरेकः शब्दः ; भिन्नाकारप्रतीतिरभिव्यञ्जकभूतध्वनिनिबन्धना अकारादिषु दीर्घादिबुद्धिरिव। अत एकमेव शब्दतत्त्वं

मीमांसाभाष्यपरिशिष्टमातृका

पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्य...षः. अस्यार्थः. न वयं भावनाख्यमेव संस्कारमर्थप्रतीत्य...न्त्वपूर्वमेव स्वभावत एव सर्ववर्णास्तदाधानसमर्थाः. तत्र हि...वदे तावद्व्यतिक्रमेणार्थप्रतीतिरयुक्ता. प्रत्यायकभिम..वर्णस्य व्यवधानात्. त्र्यक्षरादिष्वपि पदेषु पूर्ववणक्रमो व्यवहारसिद्ध आदरणीय एव प्रथमो हि वर्णस्सर्वपदेष्वेव उत्तर-वर्णोपजन्यस्संस्कारविशेषाधायकतयार्थप्रत्यायक इष्यते. नैरन्तर्यमपि च संस्कार-स्याशुतरविनाशित्वादुपयोग्येव. एकवक्तृप्रयुक्ताश्च यथादर्शनं सस्काराधायका इति न किञ्चिदनुपपन्नम्.

नन्विदं बहुतरमदृष्टं कथं कल्प्यते. यावतैक एव शब्दो गकारादिव्यति-रिक्तो वाचकोस्तु. न तस्याप्रतीतेः. न हि गकारादिपदेषु गकारादिव्यतिरिक्त एकः शब्दोवभाति.

ननु सर्ववर्णेषु शब्दश्शब्द इत्येकबुद्धेरेकश्शब्दः भिन्नाकारप्रतीति.... भिव्यञ्जकभूतध्वनिनिबन्धना.. आकारादिषु दीर्घ.... द्धिरिव. अत एकमेव शब्दतत्त्वं

तत्तदभिव्यञ्जकध्वनिरूपोपरक्तं तस्य तस्यार्थविशेषस्य वाचकम् अकारादिवत् । ध्वनयश्च व्यञ्जकीभवन्तः स्वभावादेव तत्तद्वर्णरूपोपरक्तं क्रमवदभिन्नमपि भिन्नमभिव्यञ्जयन्ति ; तत्राह—भेददर्शनाभावादिति* गकारादिभ्यो १५७-३ भिन्नतया अदर्शनात् । तथा हि—वर्णप्रतीतिस्तावदस्तीति न विवादः । द्वयी च प्रतीतिः—अनुभूतिः स्मरणं च । तत्र न वर्णधीः स्मृतिरवकल्पते एकं शब्दतत्त्वं सर्ववर्णेषु वदतः । पारिशेष्यात् अनुभूतिरेवेयम् । तेन सिद्धास्तावत् भिन्ना वर्णाः । भिन्नेषु च 'शब्दः, शब्दः' इति या बुद्धिः, सापि न शब्दत्वं सामान्यं कल्पयितुं क्षमा, श्रोत्रग्राह्यतया तदुपपत्तेः । ननु वर्णस्वरूपातिरेकि पदमेकं प्रतिपद्यते; न चासौ वर्णसमुदायोऽवयवी वा, 'जरा, राज' इत्यादिपदभेदावगमात् । नावगतिक्रमभेदेन समुदायावयविप्रतीतिर्भिद्यते । उच्यते—सत्यमस्त्येषा प्रतीतिः । सा तु क्रमविशेषभाजो वर्णानेवावलम्बते । ननु वर्णानां नित्यतया विभुतया च स्वतः कालनिबन्धना देशनिबन्धना वा क्रमवत्ता न

मीमांसाभाष्यपरिशिष्टमातृका

तत्तदभिव्यञ्जक........क्तं तस्य तस्यार्थविशेषस्य वाचकं अकारादिवत्........ भवन्तः स्वभावादेव तद्वर्णरूपोपरक्तक्रमवदभिन्न........मभिव्यञ्जयन्ति. तत्राह. भेददर्शनाभावादिति गकारादिभ्यो भिन्न........त्. तथा हि वर्णप्रतीतिस्तावदस्तीति न विवादः द्वयी च प्रतीतिः........रणं च तत्र न वर्णधीः स्मृतिरवकल्पते. एकं शब्दतत्त्वं सर्व........ता पारिशेष्यात् प्रतीतिरेवेयं तेन सिद्धान्तस्तावद्भिन्ना वर्णाः भिन्नेषु शब्दश्शब्द इति या बुद्धिस्सापि न शब्दत्वं सामान्यं कल्पयितुं क्षमा श्रोत्रग्राह्यतया तदुपपत्तेः.

ननु वर्णस्वरूपातिरेकि पदमेकं प्रतिपद्यते. न चासौ वर्णसमुदायः अवयविराज इत्यादिपदभेदावगमात् नावगतिक्रमभेदेन समुदायावयविप्रतीतिर्भिद्यते. उच्यते. सत्यमस्त्येषा प्रतीतिः. सा तु क्रमविशेषभाजो वर्णा नैवावलम्बते. ननु वर्णानां नित्यतया विभुतया च स्वतो कालनिबन्धना देशनिबन्धना वा क्रमवत्ता

संभवति । तदुपलब्धयस्तु क्रमविशेषवत्यः । न च ता एवात्र प्रतीयन्ते, वर्णाविषयत्वादस्य प्रत्ययस्य । उच्यते—प्रत्येकोपलम्भक्रमविशेषसंलीढानेव वर्णानेषा प्रत्यवमृशन्ती पदप्रतीतिरुदयत इति न किञ्चिदनुपपन्नम् । एतस्मिन् दर्शनेऽन्त्यवर्णप्रत्ययस्य पूर्ववर्णजनितसंस्कारसहितस्य वाचकता ; न श्रूयमाणस्य, अन्यथा अन्विताभिधानानुपपत्तेः ।

अपरानुमतम्—सकलवर्णोपलम्भजनितैः संस्कारैरेकमेव स्मरणज्ञानं जन्यते ; तद्गोचरीभूता वर्णा एवार्थस्यावगमका इति । यद्यपि च प्रत्येकवर्णोपलम्भजनिताः संस्काराः प्रतिविषयं स्मरणहेतव एव भवितुमर्हन्ति, तथाप्यर्थप्रतीतिकार्यान्यथानुपपत्त्या तेषां सहितानामेकस्मरणकारित्वं कल्प्यते । भाष्यार्थस्तु—"पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इत्यदोषः" इति स्मरणद्वारेण पूर्ववर्णजनितसंकारस्योपकारकत्वम् ; तेन पूर्ववर्णैः सह स्मर्यमाण इत्यर्थः । नन्वेवमपि 'शब्दादर्थं प्रतिपद्यामहे' इति लौकिकं वचनं नोपपद्यते ।

मीमांसाभाष्यपरिशिष्टमातृका

संभवति. तदुपलब्धयस्तु क्रमविशेषवत्यः.

न च ता एवात्र....न्ते. वर्णविषयत्वादस्य प्रत्ययस्य. उच्यते. प्राप्यो ........मविशेषसंलीढा नैवर्णानेषा प्रत्यवमन्ती........दयत इति. न किञ्चिदनुपपन्नम्. एतस्मिन्दर्शनेऽन्त्यवर्ण.......स्य पूर्ववर्णजनितसंस्कारसहितस्य वाचकता न श्रूय.......थान्विताभिधानानुपपत्तेः. अपरानुमतं सकलवर्णोपलम्भ.... स्संस्कारै रेकमेव स्मरणज्ञानं जन्यते. तद्गोचरीभूता वर्ण.......स्यावगमका इति.

यद्यपि प्रत्येकवर्णोपलम्भजनितास्संस्का....प्रतिविषयं स्मरणहेतव एव भवितुमर्हन्ति. तथार्थप्रतीतिकार्यान्यथानुपपत्त्या तेषां सहितानामेकस्मरणकारित्वं कल्प्यते. भाष्यार्थस्तु पूर्ववर्णजनितसंस्कारसहितोऽन्त्योवर्णः प्रत्यायक इत्यदोष इति स्मरणद्वारेण पूर्ववर्णजनितसंस्कारस्योपकारत्वं तेन पूर्ववर्णैस्सह स्मर्यमाण इत्यर्थः.

नन्वेवमपि शब्दादर्थं प्रतिपद्यामहे इति लौकिकं वचनं नोपपद्यते.

न, संस्कारव्यवधानाद्धेतुत्वोपपत्तेः ।

अथ गौः * न च वृक्षव्यतिरिक्तं वनं यस्मान्नोपलभ्यते, ततः १६३-१
'वनं नास्ति' इति मन्यामहे । वृक्षव्यतिरिक्तत्वेन वनस्यानुपलभ्य- १७२-४
मानतया नास्तित्वं नोच्यते । यदि हि तथोच्येत, व्यक्तिव्यतिरेकेणानुपलभ्य-
मानाकृतेरभावः स्यात् । यदि हि वने अन्येन हेतुना समीपगमनादिना १७३-१
सद्भावविपरीतप्रत्ययः 'मिथ्यैव वनप्रत्ययः' इत्येवंरूपः, ततः 'वनं नास्ति'
इत्यवगच्छामः । अथ वनादिष्वपि गवादिवत् न प्रत्ययविपर्यासो भवति,
तदा ते वनादयो न सन्तीत्यसंभाव्यमेव ।

अथ सम्बन्धः कः * यस्माच्चिरवृत्तः सन् स्मर्येतापि—न च १७४-१
हिमवदादिषु कूपारामादिवत् सम्बन्धस्य कर्तुर्न स्मरणम्—तेन शब्दै-
र्वैदिकैर्व्यवहरद्भिरवश्यं स्मरणीयः सम्बन्धस्य कर्ता स्यात् व्यवहारस्य
च । कर्ता वेदकार इति यावत् । यद्यपि चान्यत्रोपलब्धस्य विद्यमान-
स्याप्यर्थस्य विस्मरणं भवति, तथाप्येतावन्मात्रेणैव विना प्रमाणेन
सम्बन्धारं प्रतिपद्यामहे । अस्ति चान्यः प्रकारो वृद्धव्यवहारलक्षण इत्यर्थः ।
एतदेवोपपादयितुं सन्देहं तावदाह—वृद्धानामित्यादिना केनचित्सम्बन्धः १९३-१

मीमांसाभाष्यपरिशिष्टमातृका

न संस्कारव्यवधानाद्धेतुत्वोपपत्तेः,, अथ गौः. न च वृक्षव्यतिरिक्तं वनं यस्मान्नो-
पलभ्यते ततो वनं नास्तीति मन्यामहे. वृक्षव्यतिरिक्तत्वेन वनस्यानुपलभ्यमान-
तया नास्तित्वं नोच्यते. यदि हि तथोच्येत व्यतिरेकेणानुपलभ्यमानकृते
भावस्स्यात्. यदि हि वनेन्येन हेतुना समीपगमना........परीतप्रत्ययो मिथ्या
एव. वनप्रत्ययः इत्येवंरूपः·····ता वनं नास्ति इत्यवगच्छामः. अथ वनादिष्वपि
गवादिव····प्रत्ययविपर्यासो भवति. तदा ते वनादयो न सन्तीति अ·········व.

अथ संबन्धकः. यस्माच्चिरवृत्तस्सन् स्मर्येत न च हि·········दिषु कूपा-
रामादिवदसं बन्धस्य कर्तुः स्मरणं तेन···वेदिकैर्व्यवहरद्भिरवश्यं स्मरणीयः
संबन्धस्य कर्ता स्यात् व्यवहारस्य च कर्ता वेदकार इति यावत्. यद्यपि
चान्यत्रोपलब्धस्य विद्यमानस्याप्यर्थस्य विस्मरणं भवति. तथाप्येतावन्मात्रेणैव विना
प्रमाणेनैव संबन्धान्तरं प्रतिपद्यामहे. अस्ति चेदन्यः प्रकारो वृद्धव्यवहार लक्षण
इत्यर्थः. एतदेवोपपादयितुं सन्देहं तावदाह वृद्धानामित्यादिना. केनचित्संबन्धः

१९४-४प्रवर्तितः इत्यन्तेन * वृद्धव्यवहाराद्वार्थावगतिः सम्बन्धस्मरणाद्वेति सन्देहः। अत्र सन्देहे वृद्धव्यवहारेऽवगतिहेतौ सति नार्थादापद्येत सम्बन्धा। अपि च वृद्धव्यवहारवादिनः प्रत्यक्षं व्यवहारं कारणमुपदिशन्ति। यदि वेदकारादन्ये बहवः सम्बन्धारः, म्लेच्छादिषु तदा कथं वेदकारेण ते संगंस्यन्ते? एको वेदकारो दुष्टेषु व्यवहाराभावात् प्रयोजनशून्यतया न
१९५-६शक्नुयादेव। कथम्? उत्तरम्—सम्बन्धक्रियैव नोपपद्येत * न हि
१९६-२दृष्टेऽनुपपन्नं नामेति * अर्थप्रतीतिं कार्यभूतां शब्दजन्यतया वृद्धसम्बन्धिनीमवगम्य बाला व्युत्पद्यन्त इति नानुपपत्तिः।

२०६-२ न चैवं श्रूयते–कृते कर्मणि तावत्येव फलं भवतीति; किं तु कर्मणा नियोगसिद्धिव्यवधानेन फलं प्राप्यत इति * शास्त्रार्थः—सहकारिव्यपेक्षया कालान्तरे फलजनकत्वमविरुद्धमिति।

२०८-२ योऽसौ प्राणिति* प्राणवायोरुत्सर्गः; अपानिति अधोमार्गेण, उच्छ्वासो मुखेनेति विशेषः। ये भूतानां विशेषगुणास्ते यावद्द्रव्यभावित्वेन व्याप्ता

मीमांसाभाष्यपरिशिष्टमातृका

प्रवर्तित इत्यन्तेन. वृद्धव्यवहाराद्वार्थावगतिः संबन्धस्मरणाद्वेति सन्देहः. अत्र सन्देहे वृद्धव्यवहारेवगतिहेतौ सति नार्थादापद्येत संबन्धः.

अपि च वृद्धव्यवहारवादिनः प्रत्यक्ष·········व्यवहारं कारणमुपदिशन्ति. यदि वेदकारादन्ये बहव·········बन्धारोम्लेच्छादिदेशेषु तदा कथं वेदका·········स्यन्त एको वेदकारो दुष्टेषु व्यवहाराभावत् प्र·········न्यतया न शक्नुयादेव. कथं उत्तरं संबन्धक्रियैव नो·········त. न हि दृष्टेनुपपन्नं नामेति. अर्थप्रतीतिं कार्यभूता·········या वृद्धसंबन्धिनीमवगम्य बाला व्युत्पद्यन्त इति नानुपपत्तिः. न चैवं श्रूयते. कृते कर्मणि तावत्येव फलं भवतीति. किन्तु कर्मणा नियोगसिद्धिव्यवधानेन फलं प्राप्यत इति शास्त्रार्थः सहकारिव्यपेक्षया कालान्तरे फलजनकत्वमविरुद्धमिति ॥

योऽसौ प्राणिति प्राणवायोरुत्सर्गः अपानित्यधोमार्गेणोच्छ्वासो मुखेति नेति विशेषः ये भूतानां विशेषगुणास्ते यावद्द्रव्यभावित्वेन व्याप्ता

रूपादयः ; सुखादयस्तु न यावद्भूतवर्तिन इति व्यापकाभावात्तेषां भूतगुणत्वाभाव इति ; तथा ये प्रत्यक्षा भूतगुणास्ते परेन्द्रियग्राह्या अपि भवन्ति यथा रूपादय एव ; न च तथा सुखादय इति निषिद्धे भूतगुणत्वे तैर्गुणैरन्यस्य गुणिनोऽनुमानं न संभवति ; गुणत्वे सिद्धे सत्येतदेवं स्यात् ; न त्वेतेषां गुणत्वे किञ्चन प्रमाणमस्ति । अत्रोच्यते— उत्पत्तिमत्तया तावत् सुखादिभिः कस्मिंश्चित् समवेतव्यम्, समवायिकारणशून्यस्य कार्यस्यासम्भवात् । न च क्षणिकत्वात् सर्वभावानां कार्यकारणयोः सहभावासंभवेन समवायिकारणतैव न सभवतीति वाच्यम्, प्रत्यभिज्ञाबलेन क्षणभङ्गस्य निरस्तत्वात् । तत्र संयोगविभागौ प्रत्यनपेक्षकारणत्वाभावात् कर्म तावन्न भवति । तथा निष्क्रियत्वान्निर्गुणत्वाच्च समवायिकारणत्वासंभवाच्च कार्यद्रव्यमपि नास्तीति आश्रितत्वात् गुणत्वमेव निश्चीयते । अतश्च तेन विना कस्य सुखादयः? *२१०-४ इति चोदिते यदुक्तम् "न कस्यचिदपीति वदामः" इति, तदयुक्तम्। उच्यते—भूतेभ्यस्तावदाश्रयान्तरं नोपपद्यते । न च भूतानामेवाश्रयत्वं नोपपद्यते । येऽपि परेन्द्रियग्राह्या भूतानां वैशेषिकगुणाः, ते कारणगुण-

मीमांसाभाष्यपरिशिष्टमातृका

रूपादः. सुखादयस्तु न यावद्भूतवर्तिन इति व्यापकत्वाभावात्तेषां भूतगुणत्वाभाव इति तथा ये प्रत्यक्षभूता गुणास्ते परेन्द्रियग्राह्याः अपि भवन्ति. यथा रूपादय एव न च तथा सुखादय इति निषिद्धे भूतगुणत्वे तैर्गुणैरन्यस्य गुणिनोनुमा.... गुणत्वे सिद्धे सत्येतदेवं स्यात्. न त्वेतेषां गुणत्वे.......प्रमाणमस्ति. तदुच्यते. उत्पत्तिमत्तया तावत् सुख..........श्चित् समवेतव्यं समवायिकारणशून्यस्य कार्यस्य.......णिकवात्. सर्वभावानां कार्यकारणयोस्सहभावासं......यिकारणतैव न संभवतीति वाच्यम्. प्रत्यभिज्ञाबले....ण भङ्गस्य निरस्तत्वात् तत्र संयोयविभागौ प्रत्यनपेक्ष....णत्वाभावात् कर्म तावन्न भवति. तथा निष्क्रियत्वान्निर्गुणत्वाच्च समवायिकारणत्वासंभवाच्च कार्यद्रव्यमपि नीस्तीत्याश्रितत्वाद्गुणत्वमेव निश्चीयते. अतश्च तेन विना कस्य कस्य सुखायेति चोदिते यदुक्तं न कस्यचिदपीति वदाम इति तदयुक्तम् .उच्यते. भूतेभ्यस्तावदाश्रयान्तरं नोपपद्यते. न च भूतानामेवाश्रयत्वं नोपपद्यते. येपि परेन्द्रियग्राह्या भूतानां वैशेषिकगुणास्ते कारणगुण-

पूर्वकाः सन्तो यावद्गुणिभूतभाविनो भवेयुः, नान्ये यथा सुरायां मदशक्तिः ; न हि शक्तिर्यावद्भूतभाविनीति शक्यते वक्तुम् ; अपि तु सकलरूपादिगुणभाजोऽपि द्रववन्मन्त्राद्युपधाने कार्यादर्शनादेवं कल्प्यते— किञ्चिदस्यातीन्द्रियं रूपमासीत्, तन्मन्त्रादिबलेनापहृतमिति; तदेव सामर्थ्यं शक्तिरित्युच्यते। तदुक्तम्—"शक्तिवच्चैतन्यमपि" इति। ये च बहिरिन्द्रिय-प्रत्यक्षा भूतानां वैशेषिकगुणा रूपादयः, ते च परेन्द्रियग्राह्याः, नान्ये मदशक्तिवदेव तस्मात् दृष्टभूतातिरिक्ताश्रयानुमाने किमपि कारणं नास्तीति भूतगुणा एव सुखादय इति भूतचैतन्यमेवेति पूर्वः पक्षः । तथा "विज्ञान-घनः" इति भूतचैतन्येनोपसंहृतम्। "यत्तु न कस्यचिदपि" इत्युक्तम्, तत् स्वातन्त्र्यमभ्युपगम्य परम्—स्वतन्त्रा एव, न त्वात्मानुमानं तेभ्य इति ।

२१५-६ भवति चान्येद्युरुपलब्धे इति * सन्तानान्तरवर्तिना तावदन्येनोप-लब्ध इच्छा न दृष्टा ॥

(श्लोकद्वयं परिशिष्टान्ते संपादकेन निवेशितमौचित्यात्)

मीमांसाभाष्यपरिशिष्टमातृका

पूर्वकास्सन्तो यावद्गुणीभूतभाविनो भवेयुः नान्ये यथा सुरायां मदशक्तिः. न हि शक्तिर्या यावद्भूतभाविनीति शक्यते वक्तुम्. अपि गुणसकलरूपादि-गुणभाजोपि द्रववन्मन्त्राद्युपधाने कार्यादर्शनादेवं कल्प्यते किञ्चिदस्यातीन्द्रियं रू........सीत् तन्मात्रादिबलोनापहृतमिति तदेव सामर्थ्यं शक्ति...........ते. तदुक्तम् शक्तिवच्चैतन्यमपीति. ये च बहिरिन्द्रियम्........... न वैशेषिकगुणा रूपादयः. न च परेन्द्रियग्र............... नान्ये मदशक्तिवदेव. तस्माद्-दृष्टभूतातिरिक्ताश्रयानुमने ....रणं नास्तीति भूतगुणा एव सुखादय इति भूत-चैतन्यमे .... र्वः पक्षः. तथा विज्ञानघन इति भूतचैन्येनोपस .... तम्. यत्तु न कस्यचिदपीत्युक्तं तत्स्वातन्त्र्यमभ्युपगम्य परं स्वतन्त्रा एव नत्वात्मानुमानं तेभ्य इति भवति चान्यैरुपलब्ध इति सन्तानान्तरवर्तिना तावदन्यो नोपलब्धः इच्छा न दृष्टा.

इदं शालिकनाथेन भाष्यतत्वार्थवेदिना ।
परिशिष्टार्थबोधाय परिशिष्टं प्रवर्तितम् ॥
गणनेक्षरचुञ्चूनामभितिष्ठत्कनिष्ठिकाम् ।
नारायणो लिखितवान्परिशिष्टं महाग्रहात् ॥

कर्मैके तत्र दर्शनात् । पूर्वोक्तसङ्गतिमाह—उक्तं नित्य इति * उक्तं२५७-२ नित्यः शब्दार्थसम्बन्ध इत्यनुपपन्नम्, शब्दस्यानित्यत्वात् । नन्वनित्यत्वेऽपि च क्षित्यादिवदकृतकसम्बन्धोऽस्त्वित्यत्राह—विनष्टः शब्दः२५८-२ प्रथमोच्चरितः, पुनरस्य अन्यस्य क्रियमाणस्यार्थेन अभिधेयेन सह अकृतकः सम्बन्धो नोपपद्यते * कुत इत्याह—यस्मान्न प्रथमश्रुतात् कुतश्चन शब्दात्२५९-२ कश्चिदर्थं प्रत्येति * अतः शक्तिग्रहापेक्षा; तदपेक्षायाश्च शक्तिग्रहव्यवहारकालयोः स्थिरत्वं तस्य स्यात्; न च तदस्ति, उच्चरितस्य ध्वस्तत्वात् । तस्मान्नित्यत्वं वक्तव्यम् । पृच्छति—कथमिति * अनित्यत्वे शब्दव्यवहारः२५९-२ कथम्? उत्तरत्वेन सूत्रं पठति । क्रियत इति कर्म, तत्र प्रयत्नोत्तरकाले दर्शनात्, अन्यथा अदर्शनात् प्रयत्नकार्यत्वेऽन्वयव्यतिरेकौ दर्शितौ भवतः । अन्यथासिद्धिं चोदयति—नन्विति * परिहरति—नेति ब्रूमः;२६१-१ यस्मादस्य प्रागभिव्यञ्जनात् सत्त्वे न किञ्चन प्रमाणमस्ति मूलोदकादावङ्कुरादिलिङ्गमिव । तथापि किमित्याह—संश्चाभिव्यज्यते नासन् *॥ २६३-१

मीमांसाभाष्यपरिशिष्टमातृका

कर्मैके तत्र दर्शनात् । पूर्वोक्तसंगतिमाह उक्तं नित्य इति. उक्तं नित्यः शब्दार्थसंबन्ध इत्यनुपपन्नं. शब्दस्यानित्यत्वात्. नन्वनित्यत्वेऽपि च क्षित्यादिवदकृतकसंबन्धोऽस्त्वित्राह. विनष्टश्शब्दः प्रथमोच्चरितः पुनर....न्यस्य क्रियमाणस्यार्थेनाभिधेयेन स...तकस्संबन्धो नोपपद्यते. कुत इत्याह. यस्मान्न.... ....त् कुतश्चन शब्दात् किञ्चिदर्थं प्रत्येति. अतश्शक्तिग्र........तदपेक्षायाश्च शक्तिग्रहव्यवहारकालयोः स्थिर........च तदस्ति उच्चरितस्य ध्वस्तत्वात् तस्मान्नित्यत्वं वक्तव्यं पृच्छति.......अनित्यत्वे शब्दव्यवहारः कथम्. उत्तरत्वेन सूत्रं पठति क्रियते......र्म तत्र प्रयत्नोत्तरकाले दर्शनादन्यथादर्शनात् प्रयत्नकार्यत्वेन्वयव्यतिरेकौ दर्शितौ भवतः. अन्यथासिद्धं चोदयति नन्विति. परिहरति नेति ब्रूमः. यस्मादस्य प्रागभिव्यञ्जनात् सत्वे किञ्चन प्रमाणमस्ति मूलोदकादावङ्कुरादिलिङ्गमिव. तथापि किमित्याह संश्चाभिव्यज्यते नासत् ॥

O

२६३-१ अस्थानात् * कुतोऽस्थानमित्याह—न चैनमिति । न च सन्नोप-
२६३-३लभ्यते * किन्त्वसन्नेव । कुतः ? अनुपलम्भकारणानां व्यवधानादीनाम-
२६३-५भावेऽप्यनुपलम्भनात् । न चासौ विषयमप्राप्तः * आकाशविषयत्वात्
कर्णच्छिद्रेऽप्यनुपलम्भनात् । न व्यवधानं वर्णानाम्, श्रोत्रे नित्यसमवेत-
त्वात् । न विषयाप्राप्तिः, श्रोत्रसमवायादेव विषयप्राप्तेः श्रोत्रस्याकाश-
त्वात् आकाशगुणत्वाच्छब्दस्य । आकशविषयो यतः ततो नास्त्यभिव्यञ्जन-
मावरणापगमात् । ज्वालायामिवानुमिते भेदेऽन्यथानानुपपन्ना प्रत्यभिज्ञा ॥

२६५-१ करोतिशब्दात् * त्रिविधे लौकिकवाक्ये विधिनिषेधसिद्धार्थरूपे
करोतिशब्दं व्यवहर्तारः प्रयुञ्जते । यदि ते प्रत्यभिजानते, कथं व्यवह-
रेयुः करोतिशब्देन ? तस्मादनित्यः ॥

२६५-१ सत्त्वान्तरे च यौगपद्यात् * यदा नानादेशेषु युगपच्छब्दः 'क'
इत्युच्चार्यते, तदा तद्वक्तृदेशेषु विभिन्नेषु युगपत् 'क' इति शब्द

मीमांसाभाष्यपरिशिष्टमातृका

अस्थानात् ॥ कुतोऽस्थानमित्याह न चैनमिति. नासन्नोपलभ्यते किञ्च सन्नेव. कुतः. अनुपलम्भकारणाकारणादीनां व्यवधानादीनामभावेप्यनुपलम्भनात्. न चासौ विषयमप्राप्तः. आकाशविषयत्वात् कर्णछिद्रेप्यनुपलम्भनात् न व्यवधानं वर्णानां श्रोत्रे नित्यसमवेतत्वान्नाविषयाप्राप्तिः. श्रोत्रसमवायादेव विषयप्राप्तेः. श्रोत्रस्याकाशत्वात् आकाशगुणत्वाच्छब्दस्याकाशविषयो यतः त..मावराणावगमात् ज्वालायामिवानुमिते भेदेन्यथा........न्नाप्रात्यभिज्ञा.

करोतिशब्दात् ॥ त्रिविधो लौकिकवाक्ये........निषेधसिद्धार्थरूपे व्यवहर्तारः प्रयुज्यते. यदि....प्रत्यभिजानते कथं व्यवहरेयुः. करोतिशब्देन त.... सत्वान्तरे च यौगपद्यात्.

यदा नानादेशेषु युमपच्छ...ते. तदा तद्वक्तृदेशेष्वभिन्नेषु युगपत् इति शब्द

उपलभ्यते; तदिदमेकस्य नित्यस्यानुपपन्नम्। ननु व्यक्तिषु जातेर्युगपदुपलम्भवच्छब्दस्यापि नित्यत्वादेकस्यैव नानादेशोपलम्भ इत्यत्राह— असति विशेषे *२६६-३ भेदे नित्यस्य नानेकत्वमनेकदेशोपलम्भः। न नित्यत्वमेकस्याप्यनेकदेशोपलम्भे; न हि जातेर्व्यक्तिदेशत्वेन 'इह गवि गोत्वम्' इति प्रतिभास इत्यभिप्रायः। तस्माद्भेदप्रयुक्त एव देशभेदोपपत्तिः। तथा च सति कार्यत्वसम्भवादुपपद्यते देशभेद इत्याह— कार्येति * शङ्कान्तरं च—ननु यत्रानेकत्वं तत्र २६६-४ विशेषेण भवितव्यम् यथा घटादौ। न चेह शब्दे नानादेशोपलभ्यमाने विशेषः। अतो नानेकत्वमिति। तत्राह—असति विशेषे नित्यस्यानेकत्वं न युज्यते। यथाहुरौलूक्याः परमाणुषु विशेषं कल्पयन्तः। कार्याणां तु कार्यत्वादेवासत्यपि विशेषेऽनेकत्वमुपपद्यते ज्वालायामिव। शङ्कान्तरं च—ननु नानादेशत्वं कथम्? कर्णच्छिद्रगतत्वात्तस्येत्यत्राह—असति विशेष इति। प्राप्यकारिवायुरूपाः चक्षूरश्मिवच्छ्रोत्रवृत्तयः कल्प्या इत्यभिप्रायः॥

मीमांसाभाष्यपरिशिष्टमातृका

उपलभ्यते....तदिदमेकस्यानित्यस्यानुपपन्नम्. ननु व्यक्तिषु जातेर्युगपदुपलम्भवच्छब्दस्यापि नित्यत्वादेकस्यैव नानादेशोपलम्भ इत्यत्राह असति विशेषे भेदे नित्यस्यानेकत्वमनेकदेशोपलम्भः. न नित्यत्वमेकस्याप्यनेकदेशोपलम्भः. न नित्यत्वमेक स्याप्यनेकदेशोपलम्भः. न हि जातेर्व्यक्तिदेशत्वेनेह गवि गोत्वमिति प्रतिभासः इत्यभिप्रायः. तस्माद्भेदप्रयुक्त एव देशभेदोपपत्तिः. तथा च सति कार्यत्वसंभवादुपपद्यते देशभेद इत्यत्राह कार्येति. शङ्कान्तरं च.

ननु यत्रानेकत्वं तत्र विशेषेण भवितव्यम् यथा घटादेः. न चेह शब्दो नानादेशोपलभ्यमाने विशेषः. अतो नानेकत्वमिति. तत्राह. असति विशेषे नित्यस्यानेकत्वं न युज्यते. यथाहुरौलूक्याः परमाणुविशेषं कल्पयन्तः. कार्यं तु. कार्यत्वादेवासत्यपि विशेषे नेकत्वमुपपद्यते....लायामिव.

ननु नानादेशत्वं कथं कर्णच्छिद्रगतत्वात् त.................

प्राप्यकारित्वाद्वायु. चक्षूरश्मिवच्छ्रोत्रवृत्तयः कल्प्याः..................

२७१-२ * 'दध्यत्र' इत्यत्र इकारः प्रकृतिः, दधिपदस्य स्वभावत इकारान्तत्वस्मृतेः; अचि परतः संहितायामिकारस्य यकारो विकृतिरित्युपदिशन्ति "इको यणचि" इति । तद्विकारत्व एव तदर्थावबोध उपपद्यते । तन्नित्यं न भवति यथा क्षीरादि । अपि च, इकारसादृश्यं च यकारस्य लक्ष्यते; अतोऽपि प्रकृतिविकारभावः ॥

२७२-१ वृद्धिश्च कर्तृभूम्ना स्यात् । अपि च स शब्दो यद्यभिव्यज्यते बहुभिरल्पैश्चोच्चार्यमाणस्तावानेवोपलभ्येत; यथा बहुभिरल्पैश्च प्रदीपैस्तावानेव घटः । तस्मात् क्रियते । ननु अवयवमहत्त्वबहुत्वप्रचयविशेषाणाम-
२७२-६न्यतमानुपलब्धेः कथं शब्दे महत्त्वमित्यत्राह—यतो महानुपलभ्यते * त्र्यणुकवन्महत्त्वोपलम्भान्महत्त्वकारणमनुमीयत इत्यर्थः ॥

२७२-२ समं तु तत्र दर्शनम् * यदि भेदाग्रहणमात्रविलक्षणेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः, तदा शब्दः प्रयत्नेनाभिव्यज्यत इति भविष्यति ।

मीमांसाभाष्यपरिशिष्टमातृका

दध्यत्रेत्यत्र इकारो प्रकृतिदधिपदस्य स्वभावत इकारान्तत्वस्मृ.......... यामिकारस्य यकारो विकृतिरित्युपदिशन्ति इको यणचि.......... द्विरिकारत्वेवतर्थबोध.......ते तन्नित्यं न भवति, यथा क्षीरादि. अपि चेकारसादृश्यं च यकारस्य लक्ष्यते. अतोपि प्रकृतिविकारभाव. वृद्धिश्च कर्तृभूम्ना स्यात्. अपि च स शब्दो यद्यभिव्यज्यते बहुभिर्व्यज्यते बहुभिरल्पैश्चोच्चार्यमाणास्तावानेवोपलभ्यते. तथा बहुभिरल्पैश्च प्रदीपैस्तावानेव घटः तस्मात्क्रियते.

नन्ववयवमहत्वबहुत्वप्रचयविशेषाणामन्यतमानुपलब्धेः कथं शब्देनमहत्वमित्यत्राह यतो महानुपलभ्यते त्र्यैणुकवन्महत्वोपलम्भादमहत्वकारणमनुमीयत इत्यर्थः ।

समन्तु तत्र दर्शनं—यदि भेदाग्रहणमात्रविलक्षणेन हेतुना शब्दस्य नित्यत्वं वक्तुं शक्ष्यामः, तदा शब्दः प्रयत्नेनाभिव्यज्यते इति भविष्यति.

एवं च यदि प्रागुच्चारणादनभिव्यक्तः, सन् प्रयत्नेनाभिव्यज्यत इत्येतावता तदनुपलब्धिः । तस्मादुभयोः पक्षयोः सममेतत् * ॥ २७२-१

सतः परमदर्शनं विषयानागमात् * 'तत्र दर्शनात्' इत्यतो हेतोः यत् २७३-१ परं कारणमुक्तम्—उच्चरितप्रध्वस्तः इति, अत्रापि कारणं सुवचमिति भावः । कथमित्याह—यदीति * निमित्तं किञ्चित्—यदिन्द्रियसंप्रयोग- २७४-१ मात्राद्व्यतिरिक्तं कल्पयिष्यामः । किं तदित्यत आह—संयोगविभागेति * २७५-२ अन्वयव्यतिरेकाभ्यां संयोगविभागौ कल्प्येते । उपरतयोरिति * अन्वय- २९२-१ व्यतिरेकदर्शनं हि ताल्वादिगतयोरेव संभवति, वायवीययोरतीन्द्रियत्वात् ; ताल्वादिगतयोश्च संयोगविभागयोरुपरतयोरपि शब्दः श्रूयते दूरस्थस्य ; तेन तदभावाच्छब्दानुपलम्भो युक्त इति चेत् । परिहरति—नेति[1] * २९२-२ न वयं ताल्वादिसंयोगविभागान् ब्रूमः; किं तु वायवीयान् ; ते च नूनं

मीमांसाभाष्यपरिशिष्टमातृका

एवं च यदि प्रागुत्पा....दनभिव्यक्तस्सन् प्रयत्नेनाभिव्यज्यते इत्येतावता तद.... ब्धिः. तस्मादुभयोः पक्षयोस्सममेतत् ॥

सतः परमदर्श........गमात् । तत्रदर्शनादित्यतो हेतोर्यत्परं कारणं.... स्त इति अत्रापि कारणं सुवचमिति भावः । कथमित्याह यदीति....यदिन्द्रिय-संप्रयोगमात्राद्व्यतिरिक्तं कल्पयिष्यामः. यदिन्द्रियस....गमात्राद्व्यतिरिक्तं कल्प-यिष्यामः क्तिन्तदित्यत आह........न्वयव्यतिरेकाभ्यां संयोगविभागौ........ते उपरतयोरिति अन्वयव्यतिरेकदर्शनं हि ताल्वादिगतयोरेव संभवति वायवीययो-रतीन्द्रियत्वात्ताल्वादिगतयोश्च संयोगविभागयोरुपरतयोरपि शब्दः श्रूयते. दूरस्थस्य. तेन तदभावाच्छब्दानुपलम्भो युक्तः इति चेत् परिहरति नायं ताल्वादिसंयोगविभागात् ब्रूमः किन्तु वायवीयात् ते च नूनं

---

1. अत्र "न नूनं" इत्यतः पूर्वं भाष्ये "नैतदेवम्" इति दृश्यमानं परिशिष्टाननुमतम् ।

नोपरमन्ति, यत उपलभ्यते शब्दः । न हि ते प्रत्यक्षाः; किं तु कार्यानुमेयाः;
२९३-१ तच्च कार्यं शब्दोपलम्भलक्षणमस्तीति कुतस्तदुपरमः ? चोदयति—नैत[1]-
दिति * अभिव्यक्तिपक्षे आकाशविशेषरूपं श्रोत्रम् ; तद्विषयः शब्दः;
अभिव्यक्तिश्चाभिव्यङ्ग्यवर्तिनी ; व्यञ्जकैः संयोगविभागैर्न निरवयवे
आकाशे निरवयवे च शब्देऽभिव्यज्यमाने प्रादेशिक्यभिव्यक्तिः शक्यते
वक्तुम् । कार्यत्वे तु वायवीयस्य शब्दस्य तत्संयोगविभागारभ्यत्वात्
अन्तरङ्गप्रत्यासन्नासमवायिकारणत्वोपपत्तिश्चेति प्रादेशिक्युपलब्धिर्युक्तेति ।
२९५-४ परिहरति—यस्याप्यभिव्यञ्जयन्ति, तस्याप्येष न दोषः * शब्द-
संस्कारानङ्गीकारात् । श्रोत्रसंस्कारत्वे तु नाकाशमात्रं श्रोत्रम्, श्रोत्र-
शष्कुल्यवच्छिन्नान्वयव्यतिरेकानुविधानाच्छब्दोपलम्भस्य । अतो दूरे सत्यां
कर्णशष्कुल्यामनुपकारकाः संयोगविभागाः । तेन दूरे यच्छ्रोत्रं तन्नोपलभते ।
श्रोत्रस्य स्वव्यापारे स्वातन्त्र्यविवक्षया 'उपलभते' इति निर्देशः ।

मीमांसाभाष्यपरिशिष्टमातृका

नोपरमन्ति यत उपलभ्यते शब्दः न हि ते प्रत्यक्षाः किन्तु कार्यानुमेयाः
तच्च कार्यं शब्दोपलम्भलक्षणमस्तीति कुतस्तदुपरमश्चोदयति नैतदिति.
अभिव्यक्तिपक्षे आकाशविशेष....................श्शब्दः अभिव्यक्तिश्चाभि-
व्यङ्ग्यवर्तिनी व्यञ्जक...न निरवयवे आकाशे निरवयवे च शब्देभिव्यज्य.......
देशिक्यभिव्यक्तिश्शक्यते वक्तुम्. कायत्वे तु वाय....तत्संयोगविभागारभ्यत्वात्
अन्तरङ्गप्रत्यासन्नासमव....त्वोपपत्तेश्चेति प्रदेशिक्युपलब्धिर्युक्तेति. परिहर........
व्यञ्जयन्ति तस्याप्येष न दोषः. शब्दसंस्कारानङ्गीकार....संस्कारत्वे तु नाकाश-
मात्रं श्रोत्रं कर्णशष्कुल्यवच्छिन्नादन्वयव्यतिरेकानुविधानाच्छब्दोपलम्भस्य. अतो
दूरे सत्यां कर्णशष्कुल्यामनुपकारकास्संयोगविभागः तेन दूरे यच्छ्रोत्रं तन्नोप-
लम्भते. श्रोत्रस्य स्वव्यापारे स्वातन्त्र्यविपक्षयोपलम्भ इति निर्देशः.

---

1. अत्र भाष्ये "इति" "यदि" इत्यनयोर्मध्ये "नैतत्" इति परिशिष्टानुमतं न दृश्यते ।

पुनश्चोदयति--नैतदिति * श्रोत्रस्य संस्कारपक्षेऽपि यावति प्रदेशेऽ-२९६-२
भिव्यक्तिस्तावति युगपदेव संस्कारः, कार्यगम्यत्वात् ; न क्रमेण,
अभिव्यञ्जकेषु प्रदीपादिषु तथास्वभावदर्शनात् । एवं च यौगपद्यात्
कर्णशष्कुलीमप्राप्यैव संयोगविभागाः संस्कुर्युरित्युपेयम्, प्राप्तौ क्रम-
प्रसङ्गात् । अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः सन्निकृष्टवि-
प्रकृष्टस्थितौ युगपच्छब्दमुपलभेयाताम् । न तु युगपदुपलभेते * तस्मादित्यु-२९६-४
पसंहारः । कार्यस्य तु क्रमेणाप्युत्पत्तिर्दृष्टेति कार्यत्वपक्षः श्रेयान् ।
परिहरति—नैतदिति * अभिघातेनेति । प्रयत्नेन कोष्ठसंयोगादुद्गता वायव३०२-१
उरःकण्ठादिस्थानाभिघातेन प्रेरिताः स्तिमितानि वाय्वन्तराणि प्रतिबाध-
मानाः सर्वतोदिक्कान् संयोगविभागानुत्पादयन्तस्तावच्छ्रोत्रदेशं प्राप्ता यावद्वेगं
श्रोत्राण्यभिप्रतिष्ठमानास्तत्तच्छ्रोत्रमभिव्यञ्जयन्ति ; वेगोपरमे च गमनोपरमात्
दूरगताश्च कर्णशष्कुलीरननुप्राप्ताः सन्तो नाभिव्यञ्जयन्ति ; सन्निकृष्टवि-

मीमांसाभाष्यपरिशिष्टमातृका

पुनश्चोदयति श्रोत्रस्य संस्कारपक्षेपि यावति प्रदेशेऽभिव्यक्तिस्तावति युगपदेव संस्कारः कार्यगम्यत्वात्. न क्रमेणाभिव्यञ्जकेषु प्रदीपादिषु तथा स्वभावदर्शनात्. एवं च यौगपद्यात्कर्णशष्कुलीमप्यप्राप्यैव संयोगविभागः संस्कुर्युरित्युपेयं प्राप्तौ क्रमप्रसङ्गात् प्राप्ताश्चेत् संयोगविभागः श्रोत्र...कुर्युः सन्निकृष्टविप्रकृष्टस्थितौ युगपच्छ....भेताम्. न तु युगपत्. उपलभेते. तस्मादित्युपस......स्य तु क्रमेणाप्युत्पत्तिर्दृष्टेति कार्य....श्रेयान्.

परिहरति नैतदिति. अभिघातेनैति. प्र.......कोष्ठ्यसंयोगादुद्गतो वायुरुरःकण्ठादिस्थाना........रितास्तिमितानि वाय्वन्तराणि प्रतिबोधमानास्स ..........क्कात् संयोगविभागानुत्पादयन्तः तव तच्छ्रोत्र........... प्राप्ता यावद्वेगं श्रोत्राण्यभिप्रतिष्ठमानास्तत्र श्रोत्रमभिव्यञ्जयन्ति वेगोपरमे च गमनोपरमात् दूरगताश्च कर्णशष्कुलीमनुप्राप्तास्सन्तो नाभिव्यञ्जयन्ति. सन्निकृष्टवि-

प्रकृष्टकर्णशष्कुलीः क्रमेणाभिव्यञ्जयन्तीति कुतो युगपदुपलम्भः ? दृष्टं चैतत् सञ्चारिकायां क्रमेण सन्निहितविप्रकृष्टचक्षुरनुग्राहकत्वमिति । वाय्वपनयस्तु वेगोपरमायैवोक्तः ; परमार्थतस्तु लाघवात् संयोगसंस्कार एव । ननु यदि प्राप्तास्तर्हि संयोगविभागाः किमिति नोपलभ्यन्त इत्यत्राह –ते च संयोगविभागाः सूक्ष्मत्वेनाप्रत्यक्षत्वात् स्थूलवायवीयसंयोगविभागवत् स्पर्शनेनापि नोपलभ्यन्ते । उपलभ्यन्ते यदा तदा काहलाद्यतिसन्निकृष्टध्वनौ कर्णच्छिद्र-
३०३-२ प्रदेशे त उपलभ्यन्ते । अतोऽनुपरतेषु शब्द उपलभ्यते, नोपरतेषु ; अतो न दोषः * यत एव प्रयत्नोत्था वायवोऽभिव्यञ्जकाः, अत एवानुवातं बाह्यवाय्वनुप्रवेशितानां दूरगमनम् । तस्मादाकाशगुणत्वेन क्रमेण क्रियमाणेषु न प्रतिवातानुवातयोर्विशेषः कारणदर्शने ॥

३०५-१ * प्रयोगस्य परम् । लक्षणा अभ्युपगमपरिहार उक्तः ; आदाने करोतिरिति मुख्यत्वेऽप्यविरोध इति वक्ष्यते ॥

मीमांसाभाष्यपरिशिष्टमातृका

प्रकृष्टकर्णशष्कुलीक्रमेण व्यञ्जयन्तीति. कुतोयुगपदुपलम्भदृष्टं चैतत् सञ्चारिकायां क्रमेण सन्निहितविप्रकृष्टचक्षुरनुग्राहकत्वमिति वाय्वपनयस्तु वेगोपरमायैवोक्तः परमार्थतस्तु लाघवात् संयोगसंस्कार एव.

ननु यदि प्राप्ता तर्हि संयोगविभागाः किमिति नोपलभ्यन्त इत्यत्राह. ते च संयोगविभागास्सूक्ष्मत्वेनाप्रत्यक्षत्वात् स्थूलवार्य........संयोगविभागान् संस्पर्शनोपि न विनोपल...तदाकाहलादतिसन्निकृष्टध्वनौ कर्णच्छिद्रप्रदेशे.... लभ्यन्ते. अतोनुपरतेषु शब्द उपलभ्यते....अतो न दोषः. यत एव प्रयत्नोर्थो वायव...अत एवानुमतं बाह्यवाय्वनुप्रवेशिकानां दूरागम....दाकाशगुणत्वेन क्रमेणाक्रियमाणेषु न प्रतिवा....तयोर्विशेषः कारणदर्शने ॥ प्रयोगस्य परः ॥ लक्षणाभ्युपगतपरिहार उक्तः आदाने करोतिरिति मुख्यत्वेऽप्यविरोध इति वक्ष्यते ॥

* आदित्यवद्यौगपद्यम् । यथा अथैतत् इति पूर्वोक्तमनुभाष्य ३०६-१ आदित्यादनैकान्तिकत्वमुक्त्वा तदेव समर्थयते—प्राङ्मुख इति *३०७-२ देवदत्तस्यार्जवे स्थितोऽपर आदित्य इत्येवं स्थितौ न द्वौ पश्यति । यदि द्वौ स्याताम्, तथास्थितौ पश्येत् । न च तदस्ति । देवदत्तो न द्वौ पश्यति इत्यस्याप्युपलक्षणम् । तस्मादेक एवादित्यः । कुतस्तर्हि देशभेदव्यवहार इत्यत्राह—दूरत्वादिति * अत्र देशस्य तद्देशत्वाग्रहणाद्व्या ३०८-२ मोहस्तस्य पुंसः । भवत्वेवमादित्ये तथापि किमित्याह—एवमिति * शब्दे-३०८-३ ऽपि व्यामोहादनवधारणं देशस्य ; न परमार्थतो देशभेदः । अत्र यदि देशभेदावधृतिः शब्दनानात्वे हेतुः, तत आदित्येऽनैकान्तिकता ; अथ देशभेद एव हेतुः, ततोऽसिद्धतेति भावः । व्यामुह्यतेऽनेनेति व्यामोहो दोषः । नेन्द्रियाण्यात्मग्राहीणि भवन्ति । श्रोत्रेन्द्रियमेव च शब्दानां देशः, तत्समवेतत्वात् । तस्मात् स्वदेशस्यानवधृतत्वात् मुखादिदेशस्यानवधृतत्वा-दतद्देशत्वेन तद्देशत्वग्रहणाच्च नानादेशोपलम्भो भ्रान्तिरेव । तस्माद्वायव एव श्रोत्रमागत्य शब्दं गृह्णन्तीति कुतो देशभेदः ? यदि श्रोत्रमेव संयोगदेश-

मीमांसाभाष्यपरिशिष्टमातृका

आदित्यवद्यौगपद्यम् ॥ यथा अथैतदिति पूर्वोक्तमुक्त्वानुभाष्यादित्याद-नैकान्तिकमुक्त्वा तदेव समर्थयते प्राङ्मुख इति. देवदत्तस्यार्जवे स्थितो पर आदित्य इत्येवं स्थितौ न द्वौ पश्यति. यदि द्वौ स्यातां तथा स्थितौ पश्येते. न च तदस्ति देवदत्तो न द्वौ पश्यतीत्यप्युपलक्षणम्. तस्मादेक एवादित्यः. कुतस्तर्हि देशभेदव्यवहार इत्यत्राह दूरत्वादिति. अत्र देशस्य तद्देशत्वाग्रहणाद्व्यामोहस्तस्य पुंसः. भवत्वेवमादित्ये तथापि किमित्याह एवमिति. शब्देपि व्यामोहादनवधारणं देशस्य........मार्थतो देशभेदः. अत्र यदि देशभेदापद्यतिश्शब्दनाना........ अत आदित्येनैकान्तिकता. अथ देशभेद एव हे........द्धतेति भावः व्यामुह्यते ति व्यामोहायोषः ते. ......त्मग्राहिणि भवन्ति श्रोत्रेन्द्रियमेव च शब्दानां देशः. त........त्वात् तस्मात्स्वदेशस्यानवधृतत्वान्मुखादिदेशस्यानवधृतत्वा.... ..............द्दशग्रहणाच्च नानादेशोपलम्भो भ्रान्तिरेव तस्माद्वायव एव श्रोत्रमागत्य शब्दं गृह्णन्तीति कुतो देशभेद इति श्रोत्रमेव संयोगदेश-

३०९-१मागत्य शब्दं गृह्णीयात् * तदानेकदेशत्वं सांख्यमतमास्थाय कदाचिदव-
गम्येतेति । सांख्यो हि भूतपञ्चकस्यापि शब्दं गुणमाह । तेन वक्त्रधर्मता
शब्दस्य संभविनी ; न तु तच्छ्रोत्रं वक्त्रदेशमागच्छति । यस्मात्प्रत्यक्षा हि
३०९-२कर्णशष्कुली तद्देशा श्रोत्रावच्छेदिका गृह्यते * न च श्रोत्रवृत्तयः संभवन्ति,
आकाशस्याचरत्वात्, अनवयवत्वाच्च । तस्मान्न श्रोत्रं संयोगदेशमागच्छति ।
ननु शष्कुलीवत् संयोगविभागानामपि श्रोत्रदेशप्राप्तिरप्रत्यक्षैव । तत्राह—
३१०-१वायवीयाः पुनः संयोगविभागाः कोष्ठ्यवायोः कर्णदेशे प्रादुर्भवन्तोऽपि
नोपलभ्यन्त इति नानुपपन्नम् * प्रत्यक्षा तु कर्णशष्कुली अप्राप्तत्वादेव
नोपलभ्यत इति विशेषः । अत इत्युपसंहारः । भवतु
तावदनेकदेशत्वम्, तथापि न संयोगधर्मदेशत्वं शब्दस्य संभवति ।
३११-१इदानीं तदेव नास्तीत्याह—आकाश इति * अयमाशयः—स्पर्श-
विरहित्वे सति एकेन्द्रियप्रत्यक्षत्वेन गुणस्तावच्छब्दः । गुणश्च सन् गुणि-
नमाक्षिपति । स न पृथिव्यादिरूपः, पृथिव्यादिव्यवहारनिबन्धन-
गन्धादिभिः सह शब्दाख्यगुणस्य साक्षात्सामानाधिकरण्याप्रतीतेः ।

मीमांसाभाष्यपरिशिष्टमातृका

मागत्य शब्दं गृह्णीयात्. तदानेकदेशत्वं सांख्यमतमास्थाय कदाचिदवगम्येति सांख्यो हि भूतपञ्चकस्यापि शब्दं गुणमाह तेन वक्त्रधर्मता शब्दस्य संभवी. न तु तच्छ्रोत्रदेशमागच्छति. यस्मात्प्रत्यक्षा हि कर्णशष्कुली-तद्देशा श्रोत्रावच्छेदिका गृह्यते. न च श्रोत्रवृत्तयस्संभवन्ति आकाशस्यापरत्वात्. अनवयवत्वाच्च. तस्मान्न श्रोत्रं संयोगदेशमागच्छति.

ननु शष्कुलीव संयोगविभागानामपि श्रोत्रदेशप्राप्तिरप्रत्यक्षैव. तत्राह वायवीयाः पुनस्संयोगविभागाः कोष्ठ्यवायोः कर्णदे........वन्तोपि नोपलभ्यन्त इति नानुपपन्नम्. प्रत्यक्षा तु कर्णश.......सत्वादेव नोपलभ्यन्त इति विशेषः. अत इत्युप........वदनेकदेशत्वं तथापि न संयोगधर्मदेशत्वं शब्दस्य...

इदानीं तदेव नास्तीत्याह आकाश इति. अयमाशयः. स्पर्श........केन्द्रियप्रत्यक्षत्वेन गुणस्तावच्छब्दः. गुणश्चसद्गुणिनम........ति स च पृथिव्यादि-रूपः पृथिव्यादिव्यवहारनिबन्धनगन्धादिभिस्सह शब्दाख्यगुणसाक्षात्सामानाधि-करण्याप्रतीतेः.

यत्तु वायुः शब्द इति, सा भ्रान्तिरित्युक्तम्, कर्णच्छिद्रस्यैव शब्दोपलम्भकत्वात् । तस्मादेवंभूतं शब्दगुणेनानुमीयते । तत्र चाकाशशब्दो व्युत्पन्नः । तस्य च नानात्वे मानाभावादेकमेव तत्, सन्मात्रग्राहित्वादनुमानस्य । एकत्वं पुनः स्वरूपैकत्वन्यायेनैव सिद्धम् । अतोऽपि न नानादेशेषु शब्दः ।

अभ्युपगम्यत्वेऽपि देशभेदं पुनः नानात्वं निषेधति—अपि चेति *३११-३ प्रत्यक्षविरोधादित्यर्थः । तस्माद्देशभेदो विद्यमनोऽप्यदोषकृत् ॥

*शब्दान्तरमविकारः । न च प्रकृतिविकारः ; किन्तु श्लिष्टोच्चारण-३१६-१ काले शब्दान्तरमिकाराद्यकारः । न वार्थबोधानुपपत्तिः, व्युत्पत्तेः समत्वात् । सादृश्यस्यापि व्यभिचारमाह—न हीति * स केवलं सदृश एव ॥ ३१६-२

*नादवृद्धिः परा । निरवयवो हि शब्दः, अवयवभेदानवगमात् ।३१७-१ प्रत्यक्षेणानुमानेन चेत्यर्थः । लिङ्गभूतस्य महत्त्वस्यैवासंप्रतिपत्तेर्निरवयवत्वाच्च महत्त्वानुपपत्तिः * अतः परमार्थतो न वर्द्धत इति असिद्धो३१८-१

मीमांसाभाष्यपरिशिष्टमातृका

यत्तु वायुश्शब्द इति सा भ्रान्तिरित्युक्तं कर्णच्छिद्रस्यैव शब्दोपलम्भात् तस्मोदेवंभूतं शब्दगुणेनानुमीयते. तत्र चाकाशशब्दो व्युत्पन्नः. तस्य च नानात्वे मानाभावादेकमेव तत्सन्मात्रग्राहित्वादनुमानस्य. एकत्वं पुनः स्वरूपैकत्वन्यायेनैव सिद्धम् . अतोपि नानादेशेषु शब्दः अभ्युपगम्यत्वेपि देशभेदं पुनः प्रत्यक्षविरोधादित्यर्थः. नानात्वं निषेधति अपि चेति. प्रत्यक्षविरोधादित्यर्थः. तस्माद्देशभेदो विद्यमानोप्यदोषकृत् ॥

शब्दान्तरं विकार—. न च प्रकृतिविकारः किन्तु श्लिष्टोच्चारणकाले शब्दान्तरमिकाराद्यकारः न वार्थबोधानुपपत्तिः व्युत्पत्तेस्समत्वात्. साम...स्यापि व्यभिचारमाह न हीति. न केवलं देश एव ॥ नादवृ.... ... ...निरवयवो हि शब्दः अवयवभेदानवगमात्....नुमानेन चेत्यर्थः। लिङ्गभूतस्य महत्वस्यैवासंप्रति ....यवत्वान्महत्वाच्च महत्वानुपपत्तिः । अतः परमार्थतो नव.......इत्यसिद्धो

३१८-२हेतुः ; यतो मृदुवच्च बलवच्चोच्चार्यमाणे तावन्त्येवाक्षराणि * कथं तर्हि महत्त्वव्यवहार इत्यत्राह—कर्णशष्कुलीमण्डलस्य सर्वान्नेमिभागान् व्याप्नुवद्भिर्नैरन्तर्येणानेकदेशग्रहणात् अनेकेषु प्रदेशेषु युगपदनेकग्रहणान्महानिव शब्दो व्यवह्रियते । प्रदेशमात्रव्यवधानेऽवयव इवोपलभ्यते ; सर्वथा व्यवधाने शब्दभेद एव व्यवह्रियते चन्द्र इव । ननु शब्दभेद एव नादः ; किमिदं सूत्रे नादवृद्धिः परा इति ? अत्राह—संयोगविभागाश्च नैरन्तर्येण क्रियमाणाः शब्दमभिव्यञ्जन्तः संबन्धादभेदोपचारेण सूत्रेण भाक्ता नदतिशब्दवाच्या नदतिधातुना वक्तुमर्हाः ; तेन शब्दो महानभिप्रेतः ; तेन
३१८-७वृद्धिर्नादहेतोः संयोगविभागयोः ; न शब्दस्य *

एवं तावत् पूर्वपक्षहेतवो दूषिताः ; संप्रति सिद्धान्तहेतुं प्रत्याह—
३१९-१नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् *

नित्यः स्थावरः शब्दो भवितुमर्हति । अत्र शब्दो धर्मी, स्थायित्वं

मीमांसाभाष्यपरिशिष्टमातृका

हेतुः । यतो मृदुवच्च बलवच्चोच्चार्यमाणे ताव.........................
वाक्षराणि॰ कथं तर्हि महत्वव्यवहार इत्यत्राह कर्णशष्कुलिमण्डस्य सर्वान्नेमिभागात् व्याप्नुवद्भिर्नैरन्तर्येणानेकदेशग्रहणात् अनेकेषु मे प्रदेशेषु युगपदनेकग्रहणान्महानिव शब्दो व्यवह्रियते. प्रदेशमात्रव्यवधानेऽवयव इवोपलभ्यते सर्वथा व्यवधाने शब्दभेद एव व्यवह्रियते चन्द्र इव. न तु शब्दभेद एव नादः । किमिदं सूत्रे नादवृद्धिः परेत्यत्राह. संयोगविभागाश्चनैरन्तर्येण क्रियमाणा शब्दमभिव्यञ्जन्तस्संबन्धादभेदोपचारेण सूत्रेण भक्तानदतिशब्दवाच्या नदतिधातुना वक्तुमर्हानेन शब्दो महानभिप्रेतः तेन वृद्धिनादहेतोस्संयोगविभागयोर्न शब्दस्य ॥

एवं तावत् पूर्वपक्षहेतवो दूषिताः संप्रति सिद्धान्तहेतुं प्रत्याह—
नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ।

नित्यः स्थावरश्शब्दो भवितुमर्हति. अत्र शब्दे ... ... स्थायित्व-

साध्यो धर्मः, परार्थदर्शनसंबन्धित्वं हेतुः। धर्मस्य साध्यस्याभावे हेत्वभाव-
प्रदर्शनेन स्वाभाविकीं व्याप्ततां वक्ति । दर्शनेति * दर्शनशब्देन चात्र दृष्टश्चे-३१९-३
तनस्य व्यापारः प्रयत्न उच्यते। एवंभूतश्च प्रयत्नो दर्शनमपेक्षते प्रत्यभिज्ञाम् ।
'अस्मिन् कृते इदं सिध्यति' इति साध्यसाधनमविज्ञाय लोके कस्मैचित्
क्वचिन्न प्रवर्तते । साध्यसाधनभावश्चान्वयव्यतिरेकावसेयः । साध्यता
साधनता च स्थायिन एव संभवतः, नान्यस्य । तस्मात् स्थायित्वम् ।
शङ्कते—अर्थवदिति * पूर्वसादृश्यात् पश्चादुच्चारितस्य गोशब्दस्य भेदो३२०-४
न गृह्यते ; ततो गवार्थबुद्धिरिति । परिहरति—नेति * न हीदानीं३२१-१
कश्चिच्छब्दोऽर्थवत्त्वेन सिद्धः, यद्भेदाग्रहादर्थबुद्धिः स्यात् । एवं पूर्व-
प्रयोगे श्रोतरि वक्तरि चाविशेषादनवस्था । तस्मात् सम्यक्प्रत्यभिज्ञामूलेयं
परार्थव्यवहृतिः । पुनः शङ्कते । न वयं स्वाभाविकमर्थवत्त्वं ब्रूमः ; किन्तु
कृत्रिमम् ; तेन कस्यचित् पूर्वं कृत्रिमः संबन्धः तत्सादृश्यादूर्ध्वमर्थाव-
गतिरिति चेत् । परिहृति—तदुक्तम् * यदत्र वक्तव्यम्, कल्पनाग्रन्थे३२२-१
"यस्य च दुष्टम्" इत्यत्र । न चेह शब्दप्रत्यभिज्ञायां कारणदोषः

मीमांसाभाष्यपरिशिष्टमातृका

साध्यधर्मः परार्थदर्शनसंबन्धित्वं हेतुधर्म...........भावे हेत्वभावप्रदर्शनेन
स्वाभाविकीं व्याप्तत........तेति दर्शनः शब्देन चात्र दृष्टश्चेतनस्य व्यापार....
च्यते. एवंभूतश्च प्रयत्नो दर्शनमपेक्षते प्रत्यभिज्ञा............स्मिन् कृते इदं
सिध्यतीति साध्यसाधनमविज्ञाय लोके कस्मैचित् क्वचि.................वर्तते
साध्यसाधनभावश्चान्वयव्यतिरेकावसेय....ता च स्थान एव संभवतः नान्यस्य.
तस्मात् स्थायित्वं शङ्कते अर्थवदिति. पूर्वसादृश्यात् पश्चादुच्चारितस्य गोशब्दस्य
भेदो न गृह्यते ततो न गवार्थबुद्धिरिति परिहरति नेति.

न हीदानीं कश्चिच्छब्दोर्थवत्वेन सिद्धः. यद्भेदाग्रहादर्थबुद्धिस्स्यात् . एवं
पूर्वप्रयोगे श्रोतरि वक्तरि चाविशेषादनवस्था. तस्मात्सम्यक्प्रत्यभिज्ञामूलेयं परार्थ-
व्यवहृतिः. पुनश्शङ्कते न वयं स्वाभाविकमर्थवत्वं ब्रूमः किन्तु कृत्रिमम् . तेन
कस्यचित् पूर्वं कृत्रिमस्संबन्धः तत्सादृश्यादूर्ध्वमर्थावगतिरिति चेत् परिहरति तदूक्त
यदत्र वक्तव्यं कल्पनाग्रन्थे. यस्य च दुष्टमित्यत्र न चेह शब्दप्रत्यभिज्ञायां कारणदोषः

शङ्कितः, सादृश्यविशेषस्य भेदासिद्धेरेवासिद्धत्वात्। बाधकप्रत्ययोऽप्यानु-
३२३-१मानिको निरस्तः। किञ्च सदृश इति चावगते व्यामोहादेव प्रत्ययः सन् निवर्तत एव, शालाशब्दप्रत्ययान्मालाप्रत्ययवत् * शङ्कते--यथा गावीशब्दसदृश इति चावगतेऽपि सास्नादिमत्प्रत्ययानिवृत्तिः, तद्वदिति चेत्। न हि तद्भविष्यति; यतो वक्तुस्तत्र गोशब्दमुच्चारयितुमिच्छा, अशक्त्या तु गावीशब्द उच्चरितः ; एतच्च ज्ञात्वा श्रोता तत एव गोशब्दं स्मृत्वा गोशब्दादेवार्थं प्रतिपद्यते। अतोऽयं न प्रत्यभिज्ञाभ्रमः। अकृत्रिमत्वे
३२४-४युक्त्यन्तरं चाह—न चात्रैकेनोच्चारणयत्नेन संव्यवहारश्चार्थसंबन्धश्च शक्यः॥

३२७-१ *सर्वत्र यौगपद्यात्। प्रत्यभिज्ञायां हेत्वन्तरमाह—गोशब्द उच्चारिते सर्वगवीषु गोव्यक्तिष्वविशेषेण प्रत्ययो भवति; अत आकृतिवचनः।
३२७-३तथापि किमित्याह—न चाकृत्या शब्दस्य सम्बन्धः शक्यः कर्तुम् * कुतः ? यतोऽङ्गुल्या निर्दिश्याकृतिं कर्ता संबध्नीयात् ; न च निर्देशसम्भवः ; गोपिण्डेषु हि बहूनां द्रव्याश्रितानामाकृतिगुणादीनां

मीमांसाभाष्यपरिशिष्टमातृका *

शङ्कितः सादृश्यविशेषस्य भेदासिद्धेरेवासिद्धत्वात् बाधकप्रत्ययोप्यानु.... कानिरस्तः. किञ्च सदृश इति चावगते व्यामोहादे...................... प्रत्ययस्सन्निवर्तत एव. शालाशब्दप्रत्ययान्मालाप्रत्य...............कते यथा गावीशब्दसदृश इति चावगतेपि सास्नादिमत्प्र...............वृत्तितद्वदिति चेत् न हि तद्भविष्यति यतो वक्तुस्तत्र गो...............च्छा अशक्त्या तु गावीशब्द उच्चरितः एतच्च ज्ञात्वा श्रोत .... त एव गोशब्दं स्मृत्वा गोशब्दादेवार्थं प्रतिपद्यते. अतोयं न प्रत्यभिज्ञाभ्रमः. अकृत्रिमत्वे युक्त्यन्तरं चाह न चात्रैकेनोच्चारणा यतः संव्यवहारश्चार्थसंबन्धश्च शक्यः.

सर्वत्र यौगपद्यात् ॥ प्रत्यभिज्ञायां हेत्वन्तरमाह गोशब्द उच्चारिते सर्वगविषु गोव्यक्तिष्वविशेषेण प्रत्ययो भवति. अत आकृतिवचनस्तथापि किमित्याह न चाकृत्या शब्दस्य संबन्धश्शक्यः कुर्तुम् कुतो यतोङ्गुल्या निर्दिश्याकृतिकर्ता संबन्धीयात्. न च निर्देशसंभवः गोपिण्डेषु हि बहुनाद्रव्याश्रितामाकृतिगुणादीनां

सम्भवात् आकृतिमात्रस्य विविच्य निर्देशासम्भवात् । शब्देन गृहीतशक्तिं प्रति युज्यते निर्देशः । तेन गोशब्दमन्तरेण गोशब्दवाच्यां विविक्तामाकृतिं केन प्रकारेण निर्देक्ष्यति ? नित्ये तु गोशब्दे बहुकृत्व उच्चरितः श्रुत-३२८-४ पूर्वश्चान्यासु गवाकृतिकेषु गोषु अश्रुतश्च पिण्डान्तरेषु अतदाकृतिषु, अन्वयव्यतिरेकाभ्यां व्यवहारादेवाकृतिवचनत्वमवगयिष्यतीति । अन्वय-व्यतिरेकौ च प्रत्यभिज्ञापूर्वकाविति सिद्धा प्रत्यभिज्ञा । तस्मादपि नित्यः *३२८-६

*संख्याभावात् । अष्टकृत्वो गोशब्द उच्चरित इति वदन्ति, नाष्टौ३२९-१ गोशब्दा इति । कुतः ? क्रियाभ्यावृत्तौ हि कृत्वसुच् । न च शब्दः क्रिया, किन्तु गुण एव । तेन कुतः शब्दस्याभ्यासावगत्या प्रत्यभिज्ञासिद्धिः ? उत्तरम्—अनेनेति* तदत्र शब्दस्य कार्यत्वाभावादुच्चारणक्रियाज्ञाप्यत्वेन३२९-३ प्राप्यकर्मत्वात्तदपेक्षोऽयं कृत्वसुजिति पुनः पुनर्ज्ञाप्यमानं शब्दं सूचयता कृत्वसुचा व्यवहरन्तः प्रत्यभिजानन्तीति गम्यत इति । वयं तावदिति*३३०-१ कृत्वसुज्व्यवहारस्य सार्वजनिकत्वात् प्रत्यभिज्ञापि सार्वजनिकी

मीमांसाभाष्यपरिशिष्टमातृका

संभवात्. आकृतिमात्रस्य विविच्य निर्देशासंभवाच्छ.....गृहीतशक्तिं प्रतियुज्यते. निर्देशः तेन गोशब्दमन्तरेण...............शब्दवाच्यां विविक्तामाकृतिं केन प्रकारेण निर्दे......

ये तु गोशब्दो बहुकृत उच्चरितः श्रुतपूर्वश्चान्यासु.........गोषु अश्रुतश्च पिण्डान्तरेषु अतदाकृतिकेषु अन्वयव्यतिरेकाभ्यां व्यवहारादेवाकृति-वचनत्वमवगमिष्यतीति. अन्वयव्यतिरेकौ च प्रत्यभिज्ञापूर्वकाविति सिद्धा प्रत्यभिज्ञा...तस्मादपि...त्यः ॥

संख्याभावात् ॥ अष्टकृत्वो गोशब्द उच्चरित इति वदन्ति नाष्टौ गोशब्दा इति. कुतः क्रियाभ्यावृत्तौ हि कृत्वसुच्. न च शब्दः क्रिया किन्तु गुण एव तेन कुतः शब्दस्याभ्यासावगत्या प्रत्यभिज्ञासिद्धिः. उत्तरमनेनेति. तदत्र शब्दस्य. कार्यत्वाभावादुच्चारणक्रियाज्ञाप्यत्वेन प्राप्यकर्मत्वात्तदपेक्षोयं कृत्वसुजिति पुनः पुनर्ज्ञाप्यमानं शब्दं सूचयता कृत्वसुचा व्यवहरन्तः प्रत्यभिजानन्तीति गम्यत इति. वयं तावदिति कृत्वसुज्व्यवहारस्य सार्वजनिकत्वात् प्रत्यभिज्ञापि सार्वजनिकी

३३१-२युक्तेति । आशङ्कते—अथेति* अगृहीतविवेकाः 'स' इति वदन्ति- परिहरति-
३३२-१तन्नेति * न सदृश इति प्रतियन्ति कदाचिदप्यासंसारं जन्तवः । कथं
३३३-१तर्हि प्रतियन्ति ? 'सः' इति । ननु व्यामोहोऽस्तीत्यत्राह—विदित इति*
३३५-१चो हेतौ । स्यादेतदिति* यदि शब्दस्य प्रत्यभिज्ञया कालान्तरावस्थायितो-
च्यते, तदा बुद्धिकर्मणोरपि स्थायित्वं प्राप्नोति ; यस्मात्तयोरपि प्रत्यभिज्ञा ;
३३५-२तच्च भेदाग्रहणं बुद्धिकर्मणोरप्यस्तीति । परिहरति—नैष दोष इति *
यस्मान्न ते बुद्धिकर्मणी प्रत्यक्षे ; अप्रत्यक्षयोश्च तयोः प्रत्यक्षविशेषभूतप्रत्य-
भिज्ञागोचरता कुतः स्यात् ? अथ बुद्धिकर्मणी प्रत्यक्षे एव, नानुमेये ;
३३६-१प्रत्यभिज्ञानान्नित्ये एव ; न विरोधः । शङ्कते—ह्यस्तनस्य विनाशाद-
न्योऽद्यतनः शब्द इति चेत् * दृष्टस्य सतो यददर्शनं स विनाशः ;
३३७-१उत्पन्नश्चोपलभ्यमानोऽन्य एव । परिहरति—नैष इति * यत एनं पुन-
३३८-१रुपलभामहे 'स एवायम्' इति । एतदेव प्रपञ्चयति—न हीति * तस्माद्
दृष्टस्य दर्शनेऽपि पुनः यत्र प्रत्यभिज्ञा नास्ति, तद्विषयो विनाशः;

मीमांसाभाष्यपरिशिष्टमातृका

युक्तेत्याशङ्कते अथेति. अगृहीतविवेकास्स इति वदन्ति.

परिहरति ते....ति. सदृश इति प्रतियन्ति कदाचिदप्यसंसारजन्तवः. कथं तर्हि प्रतियन्ति स इति. ननु व्यामोहोस्तीत्यत्राह विदित इति चो...... स्यादेतदिति. यदिशब्दस्य प्रत्यभिज्ञया कालान्तराव............. च्यते. तदा बुद्धिकर्मणोरपि स्थायित्वं प्राप्नोति· य .... प्रत्यभिज्ञा. तच्च भेदाग्रहणं बुद्धिकर्मणोरप्यस्तीति. परि .... ष इति. यस्मान्न ते बुद्धिकर्मणी प्रत्यक्षे अप्रत्यक्षयोश्च...त्यक्षविशेषभूतप्रत्याभिज्ञागोचरता कुतः स्य...बुद्धिकर्मणी प्रत्यक्षे एव नानुमेये. प्रत्यभिज्ञानान्नित्य एव न विरोधः. शङ्कते ह्यस्तनस्य विनाशादन्यो-ऽद्यतनश्शब्द इति चेत् दृष्टस्य सतो यददर्शनं स विनाश उपपन्नश्चोपलभ्यमानोन्य एव. परिहरति नैष इति. यत एवं पुरुष उपलभामहे स एवायमिति. एतदेव प्रपञ्च-यति न हीति. तस्माद्दृष्टस्य दर्शनेपि पुनर्यत्र प्रत्यभिज्ञा नास्ति तद्विषयो विनाशः

अन्यथा अतिप्रसङ्गः स्यात् । न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य विनष्ट३३९-१
इति परिकल्पयति * किन्तु योग्यत्वे सतीति । तथापि किमित्याह—
न हि प्रमाणज्येष्ठे प्रत्यक्षे प्रत्यभिज्ञारूपे सत्यप्रमाणता स्यात् *३४०-१
न चासौ प्रत्यभिज्ञा व्यामोहरूपा, अभावानिश्चयात्; प्रमाणसापेक्षो ह्यभावः,
प्रमाणाभावरूपत्वात् । तेन तत्रैवाभावो युक्तः, यत्र व्यामोहेनावगतिः
अनवगतिर्वा । अस्तीति पुनरव्यामोहेनावगम्यमाने न कश्चिदभावः * न३४०-२
चासिद्धेऽभावे व्यामोहः ; सति चाव्यामोहे नाभावः । तदेतदिति *३४०-४
येनानुपूर्व्येण भावाव्यामोहयोः सिद्धिः, तेनैवानुपूर्व्येणेदं सिद्धम् । तस्मा-
दित्युपसंहारः । यथेति * पूर्वोक्तदृष्टान्तविवरणम् । अपि च येऽपि सर्वेषां३४१-२
भावानां विनाशं प्रतिक्षणमिच्छन्ति * ते बौद्धाः न शब्दस्य विनाशं३४१-४
वक्तुं शक्ताः । कुतः ? यस्मादन्ते क्षयदर्शनात् ते सर्वेषामपि विनाशं

मीमांसाभाष्यपरिशिष्टमातृका

अन्यथातिप्रसङ्गस्स्यात्. न ह्यनुपलम्भमात्रेण नास्तीत्यवगम्य विनष्ट इति
परिकल्पयति. किन्तु योग्यत्वे सतीति. तथापि किमित्याह न हि प्रमाणज्येष्ठे
प्रत्यक्षे प्रत्यभिज्ञारूपे सत्यप्रमाणता स्यात्.

न चासौ प्रत्यभिज्ञा व्यामोहरूपा अभाव .... यात् प्रमाणासापेक्षो
ह्यभावः प्रमाणभावरूपत्वात् ते .....वा भावो युक्तः. यत्र व्यामोहेनावगतिः
अनवगति ....... नरव्यामोहेनावगम्यमानेन कश्चिदभावः. न चासिद्धे.....
माह सति चाव्यमोहे नाभावः तदेतन्नानुपूर्व्येण भावाः...सिद्धिः. तेनैवानुप्रपूर्व्येणेदं
सिद्धम्. तस्मादित्युपसंहारः. य ...... पूर्वोक्तदृष्टान्तविवरणम्. अपि च
येपि सर्व्वेषां भावाना. विनाशं प्रति लक्षणमिच्छन्ति. ते बौद्धाः न शब्दस्य
विनाशं वक्तुं शक्ताः कुतः ? यस्मादन्ते क्षयदर्शनात् ते सर्वेषामविनाशं

मन्यन्ते । अन्तो नाम न सान्वयानां विजातीयकार्योत्पत्तिः यथा घटस्य
३४२-२कपालोत्पत्तिः । न च शब्दस्यान्ते क्षयो लक्ष्यते घटादिवत् * क्षणमात्रो-
पलब्धिस्तु न क्षणिकत्वात् । किन्तर्हि ? व्यञ्जकवायूनां गतिमत्त्वात्
कर्णच्छिद्रे संयोगः क्षणमात्रमेव ; अनन्तरं ततो विभज्य देशान्तरं
गच्छन्ति । यत्तु कृतकत्वानुमानपुरस्सरं सदृशत्वमनुमाय सदृशापरापरो-
३४२-२त्पत्त्यनुमानम् , तच्छब्दे प्रत्यभिज्ञाप्रत्यक्षविरुद्धमित्याह—स इतीति *
तस्मादित्युपसंहारः ॥

३४४-१ * अनपेक्षत्वात् । अनेन अवयवनिरपेक्षत्वात् घटादिवत्
३४४-२साक्षाद्ग्रहणगोचरत्वेऽपि नाशङ्क्यमनित्यत्वं शब्दे इत्याह—येषामिति *
असमवायिकारणविनाशादाश्रयविनाशाद्वा सर्वत्र नाशः । शब्दे तदुभयं
नास्तीति ॥

मीमांसाभाष्यपरिशिष्टमातृका

मन्यन्ते. अतो नाम सान्वयानां वितिय कार्योत्पत्तिर्यथा घटस्य कपालोत्पत्तिः.

न च शब्दस्यान्ते क्षयो लक्ष्यते घटादिवत्. क्षणमात्रोप-
लब्धिस्तु न लाक्षणिकत्वात्. किन्तर्हि व्यञ्जकवायूनां गतिमत्वात् कर्णच्छिद्रे
संयोगः क्षणमात्र एव. अनन्तरं ततो विभज्य देशान्तरं गच्छन्ति. यत्तु
कृतकत्वानुमानपुरस्सरं सदृशत्वमनुमाय सदृशापरापरोत्पत्त्यनुमानं तच्छब्दे
प्रत्यभिर्ज्ञप्रत्यक्षविरुद्धमित्याह स इतीति. तस्मादित्युपसंहारः ।

अनपेक्षत्वात् ॥ अनेनावयवनिरपेक्षत्वा ...... टादिवत्साक्षाद्ग्रहण-
गोचरत्वेपि नाशक्यमनिमित्तत्व ...... येषामिति. असमवायिकारणविना-
शादाश्रयवि .... .... र्वत्र नाशश्शब्दे ... भयं नास्तीति ॥

* प्रख्याभावाच्च योगस्य । अनेनावयवनिरपेक्षत्वहेतुरसिद्ध ३४५-१ इत्याशङ्क्य परिहरति । चशब्दः पर्यनुयोगवाची । वायुः कोष्ठदेशादुद्गतः संयोगविभागैस्ताल्वादिभिरन्योन्यं च स्वावयवानां संयोगविभागैः शब्दीभवति । ताल्वादिभिः संयोगविभागा निमित्तकारणम् , अन्योन्यं त्वसमवायिकारणमिति । यथा चैवं तथा शीक्षाक्षराण्याहुः । स च श्रोत्रमागत्य बुध्यते, तेन पूर्वोक्तो दोष इति । नैतदेवम् * वायवीयत्वे ३४५-५ वाय्वारब्धः शब्दो भवेत् । यदा ह्यारम्भकस्तस्य वायोरवयवसन्निवेश-विशेषः स्यात् , तदा वायवीयानामवयवानां प्रत्यभिज्ञा स्यात् यथा पटस्य तन्तुमयानाम् । किञ्च स्पर्शेन्द्रियेणाभिगृह्येरन् ॥

* लिङ्गदर्शनाच्च । अन्यपरमिदं वाक्यं वाचो नित्यतामनुवदति । ३४७-१ सामिधेन्यां विनियुक्तमन्त्रगतत्वान्न शब्दस्य नित्यत्वविधानपरम् ; विधि-परत्वे हि विधितः स्यात् , न न्यायत इति शङ्का स्यात् ॥

मीमांसाभाष्यपरिशिष्टमातृका

प्रख्याभोवाच्य...अनेनावयविनिरपेक्षहेतुरसिद्ध इत्याशङ्क्य परिहर.... ब्दः पर्यनुयोगवाची वायुः कोष्ठ्यदेशादुद्गतस्संयो......गैस्ताल्वादिभिरन्योन्यं च स्वावयवानां संयोगविभागैश्शब्दीभवन्ति. ताल्वादिभिस्संयोगविभागान्निमित्तकारणम-न्योन्यत्वसमवायिकारणमिति. यथा चैवं तथा शीक्षाक्षराण्याहुः स च श्रोत्रमागत्य बुध्यते तेन पूर्वोक्तोदोष इति. नैतदेवं वायवीयत्वे वाय्वारब्धश्शब्दो भवेत्. तदा ह्यारम्भकस्य परावयवसन्निवेशविशेषस्स्यात्. तदा वायवीयानामवयवानां प्रत्यभिज्ञा स्यात् यथा पटस्य तन्तुमयात्. किञ्च स्पर्शेन्द्रियेणाभिगृह्येरन् ॥

लिङ्गदर्शनाच्च ॥ अन्यपरमिदं वाक्यं वाचो नित्यतामनुवदति. सामिधेन्यां विनियुक्तमन्त्रगतत्वान्नशब्दस्य नित्यत्वविधानपरम्. विधिपरत्वे हि विधितस्स्यात् नान्यायत इति शङ्का स्यात् ।

३४८-१ * [1]उत्पत्तौ चावचनाः स्युरर्थस्यातन्निमित्तत्वात् । अधिकरणान्तर-
पूर्वपक्षत्वेन सूत्रं योजयन्ननन्तरसङ्गत्या सह पूर्वपक्षप्रतिज्ञामाह — यद्यौ-
३४८-३त्पत्तिको नित्यः शब्दः सम्बन्धश्च, तथापि अवचनाः स्युः शब्दाः ।
न चोदनालक्षणोऽर्थो धर्म इत्यर्थः । वृद्धव्यवहारेऽपूर्वकार्यं नान्वयादि-
त्युक्तम् । इदानीं हेत्वभिधानं कर्तुं राद्धान्तिनः किञ्चिदनुगुणतया पातनिकां
३४८-४करोति—चोदना हीति * ननु वाक्यादेव पदसमुदायरूपाद्वाक्यार्थ-
३७३-१प्रतीतिर्भवतु, तथापि किमित्याह—न चायमिति * न लौकिकव्यव-
हारेऽयं समुदायः, यः श्रुतौ प्रयुक्तः; यतो वृद्धव्यवहारादुपायाद्वेदार्थोऽव-
गम्यते । ननु पदानि तावद्वैदिकानि वृद्धव्यवहारसिद्धायेव ; तेषां चाका-
ङ्क्षादित्रयोपलक्षितप्रतियोग्यन्वितस्वार्थं औत्पत्तिकोऽस्तु; तेन समुदायस्या-
प्रयुक्तत्वेऽप्यभिनवकविरचितादिव पदसमुदायाद्वैदिकाद्वाक्यादर्थसिद्धिरित्यत
३७३-२आह—पदानि ह्यमूनि प्रयुक्तानि * तानि च प्रमाणान्तराधिगतार्थान्येवेति

मीमांसाभाष्यपरिशिष्टमातृका

उत्पत्तौ चावचनास्स्युरर्थस्यात....निमित्तत्वात् ॥ अधिकरणान्तरपूर्वपक्ष-
त्वेन सूत्रं योज.........................न्तरसङ्गत्यासह पूर्वपक्षप्रतिज्ञामाह
यद्यौ..................त्यः .... शब्दास्संबन्धश्च तथापि अवचनास्स्युश्शब्दाः
न चो.......णार्थो धर्म इत्यर्थः. वृद्धव्यवहारे पूर्वकार्यं नान्वया......त्तमिदानीं
हेत्वभिधानं कर्तुं राद्धन्तान्निनं किञ्चिदनुगुण....पातनिकां करोति. चोदना हीति.

ननु वाक्यादेव पदसमुदायरूपाद्वाक्यार्थप्रतीतिर्भवतु तथापि किमित्याह
न चायमिति. न लौकिकव्यवहारे यं समुदायश्रुतौ प्रयुक्तः यतो वृद्ध-
व्यवहारादुपायाद्वेदार्थोवगम्यते. ननु पदानि तावद्वैदिकानि वृद्धव्यवहार-
सिद्धान्येव. तेषां चाकांक्षादित्रेयापलक्षितप्रतियोग्यन्वितस्वार्थं औत्पत्तिकोस्तु.
तेन समुदायस्याप्रयुक्तत्वेप्यभिनवाकविराचितादिपदसमुदायाद्वैदिकाद्वाक्यादर्थसिद्धि-
रित्याह पदानि ह्यमूनि प्रयुक्तानि तानि च प्रमाणान्तराधिगतार्थान्येवेति

१. शालिकपार्थसारथ्योः "उत्पत्तौ च" इति पाठः, न तु "उत्पत्तौ वा" इति ।

भवतोऽपि संमतम् । अत एषां प्रमाणान्तरगोचर एव नित्योऽर्थः स्यात् । समुदायं तु भवान् मानान्तरागोचरार्थं मन्यते । अप्रयुक्तः सुमुदायोऽतीन्द्रियेऽर्थे । तस्मात्समुदायार्थः कृत्रिमो व्यामोहो वा* व्यवहाराभावात् ।३७३-३ एतच्चान्वितार्थं पदमभ्युपगम्योक्तम् । इदानीं तदेव नास्तीत्याह—न च३७४-१ पदार्था एव वाक्यार्थः *अन्वितात्मा । यस्माद्वृद्धव्यवहारे आवापोद्धाराभ्यां सामान्ये सर्वान्वयसाधारणस्वरूपमात्रे पदं वर्तते ; विशेषे त्वन्वितात्मनि असाधारणे वाक्यम् । भवत्वेवम्, तथापि किमित्याह—अन्यच्च सामान्य-३७४-२ मन्यो विशेषः * यस्मिन्नर्थे व्युत्पत्तिर्नासौ वाक्यार्थः, यश्च वाक्यार्थः न तत्र व्युत्पत्तिरित्यनर्थिकैव व्यावहारिकी स्यात् । ननु व्युत्पत्तिरपेक्षेभ्यः पदार्थेभ्य एव वाक्यार्थसिद्धिरस्तु, पदधर्मत्वात् व्युत्पत्त्यपेक्षाया इत्यत्राह—न च पदार्थान्मानान्तरगोचरादतीन्द्रियवाक्यार्थाव-३७४-३ गतिः * कुतः ? असम्बन्धात्; न ह्यपूर्ववाचकं किञ्चित्पदमस्ति, अप्रयुक्त-

मीमांसाभाष्यपरिशिष्टमातृका

भवतोपि संमतम्. अत एषां प्रमाणान्तरगोचर एव नित्योर्थः स्यात्. समुदायन्तु भवान्मानान्तरागोचरार्थमन्यते . . . . . क्तस्समुदायोतीन्द्रियेर्थे तस्मात्समुदायार्थकृत्रिम. . . . . . . व्यवहाराभावात्. एतच्चान्वितार्थंपदमभ्युपगम्ये. . . . . . . . . . .नीं तदेव नास्तीत्याह न च पदार्थ एववाक्यार्थोन्वित. . . . .स्माद्वृद्धव्यवहारे अवापोद्धाराभ्यां सामान्ये सर्वान्वयसाधारणस्वरूपमात्रेपीदं वर्तते. विशेषेत्वन्वितात्मनि असाधारणे वाक्यं. भवत्वेवं तथापि किमित्याह अन्यच्च सामान्यमयो विशेषः यस्मिन्नर्थे व्युत्पत्तिर्नासौ वाक्यार्थः यश्च वाक्यार्थं न तत्र व्युत्पत्तिरित्यर्थिकैव व्यावहारिकी स्यात्.

ननु व्युत्पत्तिनिरपेक्षेभ्यः पदार्थेभ्य एव वाक्यार्थसिद्धिरस्तु पदधर्मत्वात् व्युत्पत्त्यपेक्षाया इत्यत्राह न च पदार्थान्मानान्तरगोचरादतीन्द्रियवाक्यार्थावगतिः कुतः असबन्धात्. न ह्यपूर्ववाचकं किञ्चित्पदमस्ति अप्रयुक्त-

त्वात् लोके । तेनापदार्थभूतमपूर्वम् ; अपूर्वं प्रत्यन्वयश्च पदार्थैरसम्बद्ध
३७५-१एवेति कुतः पदार्थैः सिध्येत् ? असम्बन्धादिति हेतुं प्रपञ्चयति— असति
३७५-३चेदिति * तस्मादन्यो वाक्यार्थः, नापूर्वम् । शङ्कते— अप्रयुक्तादपीति *
३७६-२परिहरति—शब्द इति * लौकिकात्क्रियादिकार्याद्भिन्नेऽपूर्वे लिङादेः
सम्बन्धग्रहणं नास्ति ; असति च तस्मिन् बोधयन् शब्दो धर्ममात्मीयं
३७६-२व्युत्क्रामेत् * यस्मात् । न चैष शब्दधर्मः * न च शक्तिग्रहणादृते
३७७-१प्रथमश्रुतात्कुतश्चन शब्दादर्थं केचित्प्रतियन्ति । चोदयति—तदुच्यते
३७७-१पदधर्मोऽयम् * प्रथमश्रुतोऽर्थं न प्रतिपादयतीति । न वाक्यधर्मः ;
वाक्याद्धि प्रथमश्रुतादभिनवकविरचितादप्यर्थं प्रतियन्तो दृश्यन्ते *
३७७-२तस्मादगृहीतशक्तिकादेव वेदवाक्यादर्थावगतिरिति । दूषयति— नैतदिति *
तस्मादवगच्छामः—नैतदेवम् , वाक्यादेवाप्रयुक्तादर्थः प्रतीयत इति ; तदा
कस्य वाक्यस्य कोऽर्थ इति प्रतिनियमे प्रमाणाभावश्च स्यात् ।
३७८-१अत्र वैयाकरणश्चोदयति—ननु पदार्थविद्भिरवगच्छद्भिरकृतक एव
वाक्यार्थसम्बन्धो भविष्यति * यस्मात्पदार्थवेदनेन संस्कृता अव-
गमिष्यन्ति, किं भ्रमत्वकल्पनया ? न ह्यपदार्थविदो नावगच्छन्तीत्येतावता

मीमांसाभाष्यपरिशिष्टमातृका

त्वात् . लोके तनापदार्थभूतमपूर्वमपूर्वं प्रत्यन्वयश्च पदार्थैरसंबन्ध एवेति कुतः. पदार्थैस्सिध्येत् । असंबन्धा. दति हेतुं प्रपञ्चयति. असति च.. स्मान्नापूर्वं वाक्यार्थः नापूर्वं शङ्कते अप्रयुक्त... परिहरति. शब्द इति. लौकिकात्क्रियादिकार्याभिन्ने पूर्वे लिङादेस्संबन्धग्रहणं नास्ति. अस... बाधयच्छब्दो धर्ममात्मीयं व्युत्क्रामेत् . यस्मान्न चैष... धर्मः. न च. शक्तिग्रहणादृते प्रथमश्रुतात्कुतश्चन शब्दाद....प्रतियन्ति. चोदयति तदुच्यते पदधर्मोयं प्रथमश्रुतोर्थन्नप्रतिपादयतीति न वाक्यधर्मः वाक्याद्धि प्रथमश्रुतादभिनकविरचितातप्यर्थं प्रतियन्तो दृश्यन्ते तस्मादगृहीतशक्तिकादेव वेदवाक्यादर्थावगतिरिति. दूषयति नैतदिति. तस्मादवगच्छामो नैतदेवं वाक्यादेवाप्रयुक्तादर्थं प्रतीयत इति तदा कस्य वाक्यस्य कोर्थ इति प्रतिनियमे प्रमाणाभावश्च स्यात्. अत्र वैयकरणश्चोदयति. ननु पदार्थविद्भिरवगच्छद्भिरकृतक एव वाक्यार्थस्संबन्धो भविष्यति यस्मात्पदार्थवेदनेन संस्कृता अवगमिष्यन्ति. किं भ्रमत्वकल्पनया. न ह्यपदार्थं नावगच्छन्तीत्येतावता

अनवगतिरेव कल्प्या, अनवगत्ययोगात्; अवगतेस्तु स्वप्रकाशत्वात्; यथा मीमांसकस्य पदात्पदार्थावगतिः प्रथमश्रवणेऽभावेऽपि द्वितीयादिश्रवणेऽस्तीत्येवाङ्गीक्रियते; न भ्रान्तिः कल्प्यते। प्रतिनियमाभाव इति चेत्, न; व्युत्पत्त्यभावेऽपि शब्दादाविव श्रोत्रादेः स्फोटरूपशब्दस्वभावादेवार्थभेदशक्तिव्यवस्थोपपत्तेः। कल्पितपदपदार्थव्युत्पत्तिसंस्कारापेक्षामात्रमनुज्ञायत; न तु पारमार्थिकस्य वाक्यस्य स्फोटस्य स्वार्थे प्रयोगापेक्षा नाम। तथा हि—न व्याकारणसिद्धाः प्रकृतिप्रत्ययादिविकल्पाः पारमार्थिकाः; न हि 'भवन्ती' इत्यादौ भू-लट्-शतृ-शप्-ङीप्-स्वादिरित्येते परमार्थतो विद्यन्ते; किन्तु एभिः प्रकृतिप्रत्ययागमादेशलोपादिविकल्पैः पदस्वरूपं ज्ञाप्यते। एवं लोकोऽपि पदार्थविभागं प्रति व्याकरणस्थानीय एव। तस्मात् कल्पितपदार्थज्ञानसंस्कृतत्वमात्रमपेक्षणीयम्; न तु य एव वाक्यार्थः स एव तद्वाक्यप्रयोगान्तरमपेक्षते। दूषयति—नेतीति *३७८-४ यद्यन्यत्र व्युत्पत्तिरन्यत्र च बोधकत्वम्, तदा को नाम संस्कारस्तेन?

मीमांसाभाष्यपरिशिष्टमातृका

अनवगतिरेव कल्प्या अनव........तेस्तु स्वप्रकाशत्वात् यथा मीमांसकस्य पदात्पदा.....तिप्रथमश्रवणोभावेपि द्वितीयादिश्रवणेस्तीत्यवाङ्गीक्रियते. न भ्रान्तिः कल्प्यते प्रतिनिय.....चेत् न व्युस्पत्त्यभावेपि शब्दादाविवश्रात्रास्फोट ......स्वभावादेवार्थभेदशक्तिव्यवस्थोपपत्तेः कल्पित......र्थव्युत्पत्तिसंस्कारापेक्षमात्रमनुज्ञायते. न तु पारमाथिकस्य वाक्यस्फोटस्य स्वार्थे प्रयोगापेक्षानाम. तथा हि न व्याकरणसिद्धाः प्रकृतिप्रत्ययादिविकल्पाः पारमर्थिकाः।

न हि भवतीत्यादौ भूलट् शतृशप्ङीप्स्वादिरित्येते परमार्थतो विद्यन्ते. किन्तु एभिः प्रकृतिप्रत्ययागमादेशलोपादिविकल्पैः पदस्वरूपं ज्ञाप्यते एवं लोकेपि पदार्थविभागं प्रति व्याकरणस्थानीय एव तस्मात् कल्पितपदार्थज्ञानसंस्कृतत्वमात्रमपेक्षणीयम्।

ननु य एव वाक्यार्थः स एव तद्वाक्यप्रयोमान्तरमपेक्षते. दूषयति नतीतिं. यद्यन्यत्र व्युत्पत्तिरन्यत्र च बोधकत्वं तदा को नाम संस्कारः तेन

यत्र क्वापि संस्कारो यतः कुतश्चन कार्यमिति न घटते व्यवहारापेक्षा च वैयाकरणस्यापि समम् । अन्यथा व्यकरणार्थस्यावगन्तुमशक्तेः । तत्र निराश्रयस्फोटपक्षो दूरोत्सारितो यथा स्यादिति स्वाश्रयव्युत्पत्तिक-वाक्यान्त्यवर्ण आश्रितः । निरस्तप्रायमिदं वैयाकरणमतं प्रागेव । तस्मात् कृत्रिमो वाक्यार्थसम्बन्धो भविष्यतीति मानान्तरागोचरं तद्व्यामोहो वा
३७९-३ भविष्यतीति । नन्विति * वाक्यार्थोऽन्वितात्मकोऽवगम्यते यथा हि गुणगुणिनोर्विशिष्टरूपा शक्तिः एवं तद्वाचकयोरपि स्वार्थद्वारा तच्छक्तिः किं नेष्यते ? एवं सर्वत्र क्रियाकारकादिविशेषणेषु द्रष्टव्यम ।
३७९-७ परिहरति—न हीति * तस्यार्थः—शुक्लो गौः कृष्णोऽश्वः इत्यन्योन्यान्वये सति विरोधः स्यात्, पदार्थस्वरूपमात्रे व्युत्पत्तेः । अर्थद्वारेण त्वन्वय आर्थः, न शाब्दः ; शब्दशक्तिस्तु चिन्त्यते । नन्वन्योन्याश्रयवशात् विशेषान्तर-
३८०-२ स्वीकारेऽपि कुतो व्युत्पत्तिविरोध इत्यत आह—न हि शुक्ल इति * न निवृत्तिरन्वियाज्जातौ, व्यक्तिमात्रसाधारणत्वात् । तस्माद्विरोधः सामान्यस्य ।

मीमांसाभाष्यपरिशिष्टमातृका

यत्र क्वापि संस्कारो यतः कुतश्चन कार्यमिति न घटते व्यवहारापेक्षाचवैयाकरणस्यापि समम् अन्यथाव्याकरणार्थस्यावगन्तुमशक्तेः तत्र निराश्रयस्फोटपक्षो दूरो....तयथास्यादिति स्वाश्रयव्युत्पत्तिकवाक्यान्त्यवर्ण......स्तप्रायमिदं वैयाकरणं मतं प्रागेव तस्मात् कृत्रि....सम्बन्धो भविष्यतीति मानान्तरगोचरंतद्व्यामोहो वा.... ति नन्विति वाक्यार्थोन्वितात्मिकोवगम्यते यथा हिगुणगिनो................ ष्टरुपाशक्तिरेवं तद्वाचकयोरपि स्वार्थद्वारातच्छक्तिः किं नेष्यते एवं सर्वत्र क्रियाकारकादिविशेषगुणेषु द्रष्टव्यम्.

परिहरति न हीति तस्यार्थः शुक्लो गौः कृष्णोश्व इत्यन्योन्ये सति विरोधस्स्यात् पदार्थस्वरूपमात्रे व्युत्पत्तेः अर्थद्वारेणत्वन्वय आर्थः न शाब्दः शब्दशक्तिस्तु चिन्त्यते नन्वन्योन्याश्रयवशात् विशेषान्तरस्वाकारेपि कुतो व्युत्पत्तिविरोध इत्याह न हि शुक्ल इति. निवृत्तिरन्वर्या जातौ व्यक्तिमात्र-साधारणत्वात्. तस्माद्विरोधस्सामान्यस्य.

ननु यदि 'शुक्लो गौः' इत्यत्रापि शुक्लोऽपि गौः गौरपि शुक्लः प्रतीयते तदा द्वितियस्यानर्थक्यप्रसङ्ग इत्यतह—न चेति * अतः * मानान्तर-३८१-२ प्रतीतानामन्वयबोधकत्वाद्दृष्टेः । तस्मात् * वृद्धव्यवहारपरम्पराश्रयणस्यापि३८१-३ वृथात्वात् कृत्रिमः । पदसङ्घाताः खल्वप्येते * वैदिकाः, मानान्तरागो-३८१-३ चरार्थत्वात् । कर्तुरस्मरणेऽपि मानान्तरगोचरार्थाः पदसङ्घाता दृश्यन्ते । [1]यथा नीलोत्पलेति * रामशब्द एकशेषः । नीलोत्पलवने चरन्तः कादम्बाः३८१-५ कृष्णदुकूलाच्छादिता नृत्यन्तीव इत्युत्प्रेक्षितुं शक्यत्वात् पुरुषकृता एव ॥

मीमांसाभाष्यपरिशिष्टमातृका

ननु यदि शुक्लो गौरित्यत्रापि शुक्लोपि गौरपि शुक्लः प्रतीयते तदा द्वितीयस्यानर्थक्यप्रसङ्गादित्याह न द्वेति मानान्तरप्रतीतानामन्वयबोधकत्वाद्दृष्टः तस्माद्वृद्धव्यवहारपरम्पराश्रयणस्यापि वृथात्वात् कृतिपदसङ्घाताः खल्वप्येते. न वैदिकाः मानान्तरगोचरार्थत्वात् कर्तुरस्मरणेपि मानान्तरगोच .......... पदसङ्घाता दृश्यन्ते. यथा नीलोत्पलेति. रामः शब्द काष...नीलोत्पलवने चरन्त कादम्बाः कृष्णदुकूलाच्छ..... वृत्यन्तीत्युत्प्रेक्षितुं शक्यत्वात् पुरुषकृत एव ॥

---

1. नीलकौशेयसंवीताः प्रनृत्यन्तीव शोभनाः ।
   रामः... ... ... ....सारसाः ।
   राम... ... ....कादम्बाः ।
   इति मुद्रितेषु, मातृकासु, अन्यत्र च दृश्यन्ते ।

* तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । राद्धान्तसूत्रं तावद्व्याचष्टे—यानि पदानि येष्वेवार्थेषु दृष्टानि वृद्धव्यवहारे तेषां पदानां तेष्वेवार्थेषु वर्तमानानां तत्तद्व्यवहारक्रियार्थेन समुच्चारणम् एकवाक्यतया प्रयोगो लोके वेदे च । तेन वृद्धव्यवहारस्य नानुपायता ।

३८३-१वैयाकरणमतं निरस्यति—नानपेक्ष्येति * येन प्रमिमामहि वाक्यम् ।

तथा वाक्यान्त्यवर्णेऽपि शक्तिकल्पनायां समानः प्रमाणाभाव इत्यत्राह—

३८९-२न हीति * यदि वृद्धव्यवहारसिद्धेभ्यः पदार्थेभ्योऽन्यो वाक्यार्थः, तदा सम्बन्धव्यवहारोऽनुपायः स्यात् । वाक्यान्त्यवर्णे शक्तिर्वाक्यस्फोटो वा कल्प्यः स्यात् । इह तु वृद्धव्यवहारगताभ्यां पदपदार्थाभ्यां नान्यौ वाक्यवाक्यार्थौ । तेन किमित्यनुपायो व्यवहारः ? कस्मै वा प्रयोजनायैकं वाक्यं कल्प्यते ? नन्वेवम्—कर्यान्वितं वा अपूर्वं वा वाक्यार्थः

३९१-२लोके वेदे च, स्वरूपमात्रं पदानामर्थः ; तेन पदातिरिक्तवाक्यकल्पना-

३९१-४पत्तिः ; तदाह—नन्वर्थापत्तितिरिति * दूषयति—तन्नेति* तदुत्तरत्वेन

मीमांसाभाष्यपरिशिष्टमातृका

तत्........यार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् । राद्धान्त........ द्व्याचष्टे यानि पदानि येष्वेवार्थेषु दृष्टानि वृद्धव्यवहारे तेषां पदानां तेष्वेवार्थेषु वर्तमानानां तत्तद्व्यवहारक्रियार्थेन समुच्चारणम् एकवाक्यतया प्रयोगो लोके वेदे च तेन वृद्धव्यवहारस्य नानुपायता. वैयाकरणमतं निरस्यति नानपेक्ष्येति येन प्रमिमीमहि वाक्यं तथा वाक्यान्त्यवर्णेऽपि शक्तिकल्पनायां समानः प्रमाणाभाव इत्यत्राह न हीति. यदि वृद्धव्यवहारसिद्धेभ्यः पदार्थेभ्योन्यो वाक्यार्थः तदा संबन्धव्यवहारोनुपायस्स्यात् वाक्यान्त्यवर्णे शक्तिर्वाक्यस्फोटो वा कल्प्यस्स्यात् . इह तु वृद्धव्यवहारगताभ्यां पदपदार्थाभ्यां नान्यौ वाक्यवाक्यार्थौ नान्यौ. तने कमित्यनुपायो व्यवहारः कस्मै वा प्रयोजनाय कवाक्यं कल्प्यते.

नन्वेवं योन्वितं वा पूर्वं वाक्यार्थः लोके वेदे च स्वरूपमात्रं पदानामर्थः तेन पदातिरिक्तवाक्यकल्पनापत्तेः तदाह नन्वर्थापत्तिरिति दूषयति तन्नेति. त.त्वेन

सूत्रं पठति—अर्थस्य तन्निमित्तत्वात् । तद्विवृणोति—भवेदर्थापत्तिः,३९१-४ यद्यसत्याम् अकल्पितायामपि शक्तौ वाक्यान्त्यवर्णे वाक्यस्फोटे वा नान्यन्निमित्तं वाक्यार्थस्यावगम्येत । अवगम्यते तु निमित्तम् *३९१-५ किमिति पृष्टे उत्तरम्—पदार्थाः * आवापोद्वापयोरन्वितविषयतया३९१-६ कल्पिता अन्विता एव पदार्थाः । आकाङ्क्षादित्रयं यस्यान्वयव्यतिरेकवत् तदुपलक्षितप्रतियोग्यन्वितशक्तिग्रहोऽपि सुकरः । तौ चावापोद्वापौ नार्थद्वारौ, मानान्तरविषयेऽर्थानामन्वयाबोधकत्वात् । तेन कल्प्या शक्तिः साक्षात् पदानामेव युक्ता, किं परम्पराश्रयणेन ? ननु अन्वये पदानामपरा शक्तिः कल्प्येतेत्यत्राह—पदानि स्वं स्वमर्थमभिधाय३९१-६ निवृत्तव्यापाराणि ; अथेदानीं पदार्था अभिहिताः सन्तो वाक्यार्थमवगमयन्ति * कथम् ? उत्तरम्—यत्र हि शुक्ल इति वा कृष्ण इति३९२-२ वा पदेन गुणोऽन्वितः प्रतीतो भवति, भवति हि खल्वसावलं गुणवति

मीमांसाभाष्यपरिशिष्टमातृका

सूत्रं पठति. अर्थस्य तन्निमित्तत्वात्. तद्विवृणोति.................र्थापत्तिः यद्यसत्यामकल्पितायामपि शक्तौ वाक्यान्त्यवर्ण......वा स्फोटेनान्यनिमित्तं वाक्यार्थस्यावगम्यते........त्तं किमिति पृष्टे उत्तरं पदार्थाः आवपोदापयोरन्वितविष.....कल्पितादन्विता एव पदार्था आकांक्षादित्रयं स्यात्. यद्यतिरेकवत्तदुपलक्षितप्रतियोग्यन्वितशक्तिग्रहेपि सुकरः. तौ चावापोद्वापौ नार्थद्वारौ मानान्तरविषये र्थानामन्वयावबोधकत्वात्तेन कल्प्या शक्तिस्साक्षात् पदानामेव युक्ता किं परंपराश्रयणेन.

नन्वन्वये पदानामपरा शक्तिः कल्प्येतेत्यत्राह पदानि स्वं स्वमर्थमभिधाय निवृत्तव्यापाराणि. अथेदानीं पदार्था अभिहितास्सन्तोपि वाक्यार्थमवगमयति. कथमुत्तरं यत्र हि शुक्ल इति वा कृष्ण इति वा पदेन गुणोन्वितः प्रतीतो भवति । भवति हि खल्वसौ वलं गुणवति

३९२-४ प्रतीतिमाधातुम् * गुणस्य गुणवता सह आकाङ्क्षादिवशेनान्वयात् ।
एवमप्यन्वयस्य किमायातमित्यत्राह—यदि गुणवति प्रत्ययमिच्छन्तः केवलं गुणवचनं चोच्चारयन्ति, न पृथगन्वयवाचकं किञ्चित्पदं तदा
३९२-५ संपत्स्यते एषां सङ्कल्पितोऽभिप्रायः * अन्वयविषयकः, अन्विते वस्तुन्यन्वयस्याप्यन्तर्भूतत्वात् ; तेनान्वितमभिधीयमानमन्वयं विहाय नाभिधीयत इति अन्वितशक्त्यैवान्वयस्यावगतत्वान्न पृथगन्वये शक्त्यपेक्षा । नन्वेवं पदानामेवान्वयहेतुत्वं स्यात् ; तेन कथं पदार्थनिमित्तकत्वम् ? सत्यम् ; अन्यथानुपपत्तिमात्रेण पदार्थनिमित्तकत्वमुपचरितमित्यदोषः । ननु वेदेऽपूर्वं वाक्यार्थः कथं सिध्यतीत्यत्राह—भविष्यति
३९२-६ च विशिष्टार्थप्रत्ययः * लिङादेः कार्यार्थत्वप्रतिपादनात् । सर्वपदानां स्वरूपमुलंध्यान्वितार्थप्रधानत्वे इह सिद्धे स्वर्गकामान्वययोग्य

मीमांसाभाष्यपरिशिष्टमातृका

प्रतीतिमाधातुं गुणस्य गुणवता सहाकांक्षादिवशेनान्वयात्.

एवमप्यन्वयस्य किमायमित्यत्राह यदि गुणवति प्रत्ययमिच्छन्तः केवलं गुणवचनं चोच्चारयन्त न पृथगन्वयवाचकं किञ्चित्पदं तदा संपत्स्यते. एषां सङ्कल्पितोभिप्रायः. अन्वित......अन्विते वस्तुन्यन्वितस्याप्यन्तर्भूतत्वात् तेना-न्वितमभि.....अन्वयं विहाय नाभिधीयत इति अन्वितशक्त्यैवान्वितस्यावगतत्वान्न पृथगन्वये सत्यपेक्षा.

नन्वेवं पदानामेवान्वयहेतुत्वं स्यात् तेन कथं पदार्थनिभित्तत्त्वम्. सत्यम्. अन्यथानुपपत्तिमात्रेण पदार्थनिमित्तकत्वमुपचरितमित्यदोषः. ननु वेदपूर्वं वाक्यार्थः. कथं सिध्यतीत्यत्राह भविष्यति च विशिष्टार्थः प्रत्ययो लिङादेः कार्यार्थत्वप्रतिपाद-नात्. सर्वपदानां स्वरुपमुल्लंध्यान्वितार्थप्रधानत्वे इह सिद्धे स्वर्गकामान्वययोग्ये

क्रियातिरेकिणि स्थायिकार्ये सा शक्तिर्युक्तेति निश्चिते तस्य च कार्यस्यैवं-विधस्य मानान्तरापूर्वत्वादपूर्वत्वं च भविष्यति । भवत्वपूर्वत्वमपि, वक्यार्थत्वं कथमित्यत्राह—विशिष्टार्थ इति * पदान्तरार्थैर्विशेषणभूतै-३९२-७ र्योऽर्थो विशिष्टः प्रत्याय्यते, स एव हि नाम वाक्यार्थः तत्सर्वपदानाम् । स्फोटनिरासमुपसंहरति—एवमवगम्यते चेत् अन्यत एव वाक्यार्थप्रत्ययः ; को जातुचिदद्दष्टां वृद्धव्यवहारे पदसमूहस्य स्फोटात्मनः शक्तिमर्थादवकल्पत इति वदिष्यति ? तामेतामन्तर्भावसिद्धिमन्वयव्यतिरेकाभ्यामुपोद्बलयति—अपि चेति * अन्वयव्यतिरेकाभ्यामेतदवकल्पते 'पदार्थान्तर्गतो वाक्यार्थः'३९२-९ इति । भवति हि कदाचिदियमवस्था मानसादपचारात् *३९२-१० केत्याह——यदुच्चरितेभ्योऽपि पदेभ्यो न पदर्था अन्विता अवधार्यन्ते, न तदा नियोगतो वाक्यार्थमवगच्छेयुः * अपि तु कदाचिदवगच्छेयुः, यद्यस्य३९३-२

मीमांसाभाष्यपरिशिष्टमातृका

क्रियातिरेकिणि स्थायिकार्ये सा शक्तिर्युक्तेति निश्चिते तस्य च कार्यस.........
........विधस्य मानान्तरापूर्वत्वादपूर्वत्वं च भविष्यति. भवत्वपू........पि वाक्यार्थत्वं कथमित्यत्राह विशिष्टार्थ इति पदान्तरार्थैर्विशेषणभूतैर्योर्थो विशिष्टः प्रत्यायते स एव हि नाम वाक्यार्थः तत्सर्वपदानां स्फोटनिरासमुपसं-हरति एवमवगम्यते चेत् एतदेव वाक्यार्थप्रत्ययः को जातुचिदद्दष्टं वृद्धव्यवहारे-पदसमूहस्य स्फोटात्मनश्शक्तिमर्थादवकल्पत इति वदिष्यति. तमेतामन्तर्भावसिद्धि-मन्वयव्यतिरेकाभ्यामुपोद्बलयति अपि चेति, अन्वयव्यतिरेकाभ्यामेतदवकल्पते पदार्थान्तर्गतो वाक्यार्थ इति भवति हि कदाचिदियमवस्था मानसादपचारात्. केत्याह यदुच्चरितेभ्योपि पदेभ्यो न पदार्था अन्विता अवधार्यन्ते न तदानियोगतो वाक्यार्थमवगच्छेयुः अपि तु कदाचिदवगच्छेयुः. यद्यस्य

